च बभारेति महीभर्ता । यस्य वक्षस्यनपायिनी श्रीर्वसति स श्रीनिवासः । सतां वैदिकानां साधूनां पुरुषार्थसाधनहेतुः प्राप्तिहेतुः सतांगतिः । न केनापि प्रादुर्भावेषु निरुद्ध इत्यनिरुद्धः । सुरान् आनन्दयतीति सुरानन्दः । 'नष्टां वै धरणीं पूर्वमविदं यद्गुहागताम् । गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः' इति मोक्षधर्मवचनाद्गोविन्दः । 'अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः । गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम्' इति, 'गौरेषा भवतो वाणी तां च विन्दयते भवान् । गोविन्दस्तु ततो देवः मुनिभिः कथ्यते भवान्' इति च हरिवंशे । गौर्वाणी तां विदन्तीति गोविन्दः तेषां पतिर्विशेषेणेति गोविदांपतिः ॥ ३३ ॥ तेजस्विनामपि तेजस्वित्वान्मरीचिः । 'तेजस्तेजस्विनामहम्'

**मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ॥ हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ ३४ ॥**

इति भगवद्वचनात् । स्वाधिकारात्प्रमाद्यन्तीः प्रजा दमयितुं शीलमस्य वैवस्वतादिरूपेणेति दमनः । ( १९० ) । अहं स इति तादात्म्यभावितः संसारभयं हन्तीति हंसः । पृषोदरादित्वाच्छब्दसाधुत्वम् । हन्ति गच्छति सर्वशरीरेष्विति वा हंसः । 'हंसः शुचिषत्' इति मन्त्रवर्णात् । शोभनधर्माधर्मरूपपर्णत्वात्सुपर्णः । 'द्वा सुपर्णा' इति मन्त्रवर्णात् । शोभनं पर्णं यस्येति वा सुपर्णः 'पततामस्मि' इति ईश्वरवचनात् । भुजेन गच्छतामुत्तमो भुजगोत्तमः । हिरण्यमिव कल्याणा नाभिरस्येति रमणीयनाभित्वात् हिरण्मयत्वाद्वा हिरण्यनाभः । बदरिकाश्रमे नरनारायणरूपेण शोभनं तपश्चरतीति सुतपाः । 'मनसश्चेन्द्रियाणां च ह्येकाग्र्यं परमं तपः' इति स्मृतेः । पद्ममिव सुवर्तुला

नाभिरस्येति, हृदयपद्मस्य नाभौ मध्ये प्रकाशनाद्वा पद्मनाभः पृषोदरादित्वात्साधुत्वकल्पना। प्रजानां पतिः पिता प्रजापतिः ॥ ॥ ३४ ॥ मृत्युर्विनाशस्तद्धेतुर्वाऽस्य न विद्यते इत्यमृत्युः। प्राणिनां कृताकृतं सर्वं पश्यति स्वाभाविकेन बोधेनेति सर्वदृक्। हिनस्तीति सिंहः। पृषोदरादित्वात्साधुत्वम् ॥ ( २०० ) ॥कर्मफलैः पुरुषान् संधत्त इति संधाता। फलभोक्ता च स एवेति सन्धिमान्। सदैकरूपत्वात् स्थिरः। अजति गच्छति, क्षिपति इति वा अजः। मर्षितुं सोढुं दानवादिभिर्न शक्यते इति दुर्मर्षणः। श्रुतिस्मृत्यदिभिः सर्वेषामनुशिष्टिं करोतीति शास्ता। विशेषेण श्रुतो येन सत्यज्ञानादिलक्षणः आत्माऽतो विश्रुतात्मा। सुरारीणां निहन्तृत्वात्सुरारिहा ॥ ३५ ॥ सर्वविद्यानामुपदेष्टृत्वात्सर्वेषां जनकत्वाद्वा गुरुः। विरिञ्च्यादीनामपि ब्रह्मविद्यासंप्रदायकत्वाद्गुरुत-

**अमृत्युः सर्वदृक् सिंहः संधाता सन्धिमान् स्थिरः॥अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ३५**
**गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः॥ निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ ३६ ॥**

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति मन्त्रवर्णात् ॥ ( २१० ) ॥ धाम ज्योतिः। 'नारायणः परो ज्योतिः' इति मन्त्रवर्णात्। सर्वकामानामास्पदत्वाद्वा धाम। 'परं ब्रह्म परं धाम' इति श्रुतेः। सत्यवचनलक्षणधर्मरूपत्वात्सत्यः 'तस्मात् सत्यं परमं वदन्ति' इति श्रुतेः। सत्यस्य सत्यमिति वा सत्यः। 'प्राणा वै सत्यं तेषामेव सत्यम्' इति श्रुतेः। सत्यः अवितथः पराक्रमो यस्य स सत्यपराक्रमः। निमीलिते यतो नेत्रे योगनिद्रयाऽतो निमिषः। नित्यप्रबुद्धस्वरूपत्वादनिमिषः, मत्स्यरूपतया वा आत्मरूपतया वा अनिमिषः भूततन्मात्ररूपां वैजयन्त्याख्यां स्रजं नित्यं बिभर्तीति स्रग्वी। वाचो विद्याया

वि०स० पतिर्वाचस्पतिः उदारा सर्वार्थविषया धीर्बुद्धिरस्येत्युदारधीरिति पदद्वयैमेकं नाम॥३६॥अग्रं प्रकृष्टं पदं नयति मुमुक्षुमित्यग्रणीः। भा०
॥१७॥ भूतग्रामस्य नेतृत्वाद्ग्रामणीः। श्रीः कान्तिः सर्वातिशायिन्यस्येति श्रीमान्। (२२०) प्रमाणानुग्राहको भेदकरस्तर्को न्यायः।
जगद्यन्त्रनिर्वाहको नेता। श्वसनरूपेण भूतानि चेष्टयतीति समीरणः। सहस्राणि मूर्धानोऽस्येति सहस्रमूर्धा। विश्वस्यात्मा विश्वात्मा।
सहस्राण्यक्षीण्यक्षाणि वा यस्य स सहस्राक्षः। सहस्राणि पादा अस्येति सहस्रपात्। 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्'
इति श्रुतेः॥ ३७॥ आवर्तयितुं संसारचक्रं शीलमस्येत्यावर्तनः। संसारबन्धान्निवृत्त आत्मा स्वरूपमस्येति

अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः॥ सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात्॥३७॥
आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः॥ अहः संवर्तको वह्निरनिलो धरणीधरः॥ ३८॥
सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः॥ सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः॥ ३९॥

निवृत्तात्मा। आच्छादिकया अविद्यया संवृतत्वात्संवृतः। (२३०)। सम्यक् प्रमर्दयति रुद्रकालाद्याभिर्विभूतिभिरिति
संप्रमर्दनः। सम्यगह्नां प्रवर्तमानात्सूर्यादहः। संवर्तकः महाप्रलयरूपः। हविर्वहनाद्वह्निः। अनादानादनिलः अननाद्वा
अनिलः। शेषदिग्गजादिरूपेण, वराहरूपेण वा धरणीं धृतवान् इति धरणीधरः॥ ३८॥ शोभनः प्रसादो ॥१९
यस्यापकारवतामपि शिशुपालादीनां मोक्षप्रदातृत्वादिति सुप्रसादः। रजस्तमोभ्यामकलुषित आत्माऽन्तःकरणमस्येति
प्रसन्नात्मा वरुणार्द्रस्वभावत्वाद्वा। यद्वा प्रसन्नस्वभावः कारुणिक इत्यर्थः। अवाप्तसर्वकामत्वाद्वा। विश्वं धृतवानिति

विश्वधृक् 'ञिधृषा प्रागल्भ्ये'। विश्वं भुंक्ते भुनक्ति पालयतीति वा विश्वभुक् । ( २४० ) । हिरण्यगर्भादिरूपेण विविधं भवतीति विभुः । 'नित्यं विभुम्' इति मन्त्रवर्णात् । सत्करोति पूजयतीति सत्कर्ता । पूजितैरपि पूजितः सत्कृतः । न्यायप्रवृत्ततया साधुः । साधयति साध्यभेदानुपादानात् साध्यमात्रसाधको वा । जनान् संहारसमये अपह्नुते अपनयतीति जह्नुः । जहात्यविदुषो भक्तान्नयाति परं पदमिति वा । नर आत्मा, ततो जातान्याकाशादीनि नाराणि कार्याणि, तानि कारणात्मना व्याप्नोतीत्यतश्च तान्ययनमस्येति नारायणः । 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति मन्त्रवर्णात् । नराज्जातानि तत्त्वानि नाराणी-

**असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः॥सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः॥४०॥**

तिं ततो विदुः । तान्येव चायनं तस्य तेन नारायणः स्मृतः' इति महाभारते । नाराणां जीवानामयनं त्वात्प्रलय इति वा नारायणः । 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतेः । 'नाराणामयनं यस्मात्तस्मान्नारायणः स्मृतः' इति ब्रह्मवैवर्तात् । 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इति मनुवचनाद्वा नारायणः । 'नारायणाय नम इत्ययमेव सत्यं संसारघोरविषसंहरणाय मन्त्रम् । शृण्वन्तु भव्यमतयो यतयोऽनुरागाउच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः' इति श्रीनारसिंहपुराणे । 'नयतीति नरः प्रोक्तः परमात्मा सनातनः' इति व्यासवचनम् ॥ ३९ ॥ यस्मिन्संख्याभेदादि न विद्यत इत्यसंख्येयः । अप्रमेय आत्मा स्वरूपमस्ये-

त्यप्रमेयात्मा । अतिशेते सर्वमतो विशिष्टः 'विश्वतः परमान्नित्यम्' इति श्रुतेः। शिष्टं शासनम्, तत् करोतीति शिष्टकृत् । शिष्टान् करोति पालयतीति वा, सामान्यवचनो धातुर्विशेषवचनो दृष्टः कुरु काष्ठानीत्याहरणे यथा तद्वदिति शिष्टकृत् ।–निरञ्जनः शुचिः। सिद्धो निर्वृत्त अर्थ्यमानोऽर्थोऽस्येति सिद्धार्थः 'सत्यकामः' इति श्रुतेः। सिद्धो निष्पन्नः सङ्कल्पोऽस्येति सिद्धसङ्कल्पः। 'सत्यसङ्कल्पः' इति श्रुतेः। सिद्धिं फलं कर्तृभ्यः स्वाधिकारानुरूपतो ददातीति सिद्धिदः। सिद्धेः क्रियायाः साधकत्वात्सिद्धिसाधनः ॥ ४० ॥ वृषो धर्मः पुण्यं तदेवाहः प्रकाशसाधर्म्यात् द्वादशाहप्रभृतिर्वृषाहः सोऽस्यास्तीति वृषाही। वृषाह इत्यत्र 'राजाहःसखिभ्यष्टच्' इति टच् प्रत्ययः । वर्षत्येष भक्तेभ्यः कामानिति वृषभः।

**वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ॥ वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ ४१ ॥**

**सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ॥ नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ ४२ ॥**

'विष्णुर्विचक्रमणात्' इति विष्णुः । वृषरूपाणि सोपानपर्वाण्याहुः परं धामारुरुक्षोरित्यतो वृषपर्वा । (२६०)। प्रजा वर्षन्ति चोदरं तस्येति वृषोदरः। वर्धयतीति वर्धनः। प्रपञ्चरूपेण वर्धत इति वर्धमानः। इत्थं वर्धमानोऽपि पृथगेवावतिष्ठते इति विविक्तः। श्रुतयः सागर इवात्र निधीयन्ते इति श्रुतिसागरः ॥ ४१ ॥ शोभना भुजा जगद्रक्षाकरा यस्येति सुभुजः । पृथिव्यादीन्यपि धारकाण्यन्यैर्धारयितुम् अशक्यानि तानि धारयन् न केनचिद्धारयितुं शक्य इति दुर्धरः। दुःखेन ध्यानसमये मुमुक्षुभिर्हृदये धार्यत इति वा दुर्धरः। यतो निःसृता ब्रह्ममयी वाक् तस्माद्वाग्मी। महांश्चासाविंद्रश्चेति महेन्द्रः ईश्वराणामपीश्वरः । वसु धनं ददातीति वसुदः । 'अन्नादो वसुदानः' इति

श्रुतेः । ( २७० ) दीयमानं तद्वस्वपि स एवेति वसुः । आच्छादयत्यात्ममाययेति वा वसुः । अन्तरिक्ष एव वसति नान्यत्रेत्यसाधारणेन वसनेन वा वसुः । 'वसुरन्तरिक्षसत्' इति श्रुतेः । एकं रूपं न विद्यत इति नैकरूप इत्यर्थः । 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतेः, 'ज्योतींषि रूपम्' इत्यादिस्मृतेश्च । बृहद्वाराहादि रूपमस्य बृहद्रूपः । शिपयः पशवः तेषु प्रतितिष्ठति यज्ञरूपेणेति शिपिविष्टो यज्ञमूर्तिः । 'यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति' इति श्रुतेः । शिपयो रश्मयस्तेषु निविष्ट इति वा । 'शैत्याच्छेदनयोगाच्च शीति वारि प्रचक्षते । तत्पानाद्रक्षणाच्चैव शिपयो रश्मयो मताः ॥ तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते' । सर्वेषां प्रकाशनशीलत्वात्प्रकाशनः ॥

ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ॥ ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ४३ ॥

अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ॥ औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ४४ ॥

॥ ४२ ॥ ओजः प्राणबलम्, तेजः शौर्यादयो गुणाः, द्युतिर्दीप्तिः, ता धारयतीत्योजस्तेजोद्युतिधरः । अथवा ओजस्तेज इति नामद्वयं 'बलं बलवतां चाहं तेजस्तेजस्विनामहम्' इति भगवद्वचनात् । ज्ञानलक्षणां दीप्तिं धारयतीति द्युतिधरः । प्रकाशस्वरूपः आत्मा यस्य स प्रकाशात्मा । सवित्रादिविभूतिभिः विश्वं प्रतापयतीति प्रतापनः ( २८० ) । धर्मज्ञानवैराग्यादिभिरुपेतत्वादृद्धः । स्पष्टमुदात्तमोंकारलक्षणमक्षरमस्येति स्पष्टाक्षरः । ऋग्यजुःसामलक्षणो मन्त्रः । मन्त्रवाच्यत्वाद्वा मन्त्रः । संसारतापातिग्मांशुतापतापितचेतसां चन्द्रांशुरिवाह्लादकरत्वाच्चन्द्रांशुः । भास्करद्युतिसाधर्म्याद्भास्करद्युतिः ॥ ४३ ॥ अमृते मथ्यमाने पयोनिधावमृतांशुश्चन्द्रः तस्योद्भवो यस्मात्सोऽमृतांशूद्भवः । भातीति

वि०स० भानुः । 'तमेव भान्तमनुभाति सर्वम्' इति श्रुतेः । शश इव बिन्दुर्लाञ्छनमस्येति शशबिन्दुश्चन्द्रः तद्वत्प्रजाः पुष्णा- भा०
॥१९॥ तीति शशबिन्दुः । 'पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः' इति भगवद्वचनम् । सुराणां देवानां शोभन-
दातॄणां चेश्वरः सुरेश्वरः । संसाररोगभेषजत्वादौषधम् । जगतां समुत्तारणहेतुत्वादसम्भेदकारणाद्वा सेतुवद्वर्णाश्रमादी-
नामिति जगतः सेतुः । 'स एव सेतुर्विधारण एषां लोकानामसम्भेदाय' इति श्रुतेः । सत्या अवितथा धर्मा ज्ञाना-
दयो गुणाः पराक्रमश्च यस्य स सत्यधर्मपराक्रमः ॥ ४४ ॥ भूतभव्यभवतां भूतग्रामाणां नाथस्तैर्याच्यते तानुपत-
पाति तेषामीष्टे शास्तीति वा भूतभव्यभवन्नाथः ॥ (३००) ॥ इति नाम्नां तृतीयं शतं विवृतम् ॥ पवत इति पवनः ।

**भूतभव्यभवन्नाथः पवनः पावनोऽनलः ॥ कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥ ४६ ॥**

'पवनः पवतामस्मि' इति भगवद्वचनात् । पावयतीति पावनः । 'भीषाऽस्माद्वातः पवते' इति श्रुतेः । अनान् प्रा- ॥१
णान् आत्मत्वेन लातीति जीवोऽनलः । न अलतीति अलतेर्गन्धवाचिनो नञ्पूर्वाद्वा । 'अगन्धमरसम्' इति
श्रुतेः । नालं पर्याप्तमस्य विद्यत इति वाऽनलः । अनित्यनेन लोके वाऽनलः । कामान् हन्ति मुमुक्षूणां भक्तानां
हिंसकानां वेति कामहा । सत्त्वानां कामिनां कामान् करोतीति कामकृत् । कामः प्रद्युम्नः तस्य जनक-
त्वाद्वा कामकृत् । अभिरूपतमः कान्तः । काम्यते पुरुषार्थाभिकाङ्क्षिभिरिति कामः । भक्तेभ्यः कामान्

प्रकर्षेण ददातीति काममदः । प्रकर्षेण भवनात्प्रभुः ॥ ४९ ॥ युगादेः कालभेदस्य कर्तृत्वाद्युगादिकृत् । युगानामारम्भं करोतीति वा युगादिकृत् ॥ (३१०) ॥ युगानि कृतादीन्यावर्तयतीति कालात्मना तस्माद्युगावर्तः । नैका माया विद्यते बह्वीर्माया वहतीति नैकमायः 'नलोपो नञः' इति नकारलोपो न भवति, अकारानुबन्धस्यापि नकारस्य प्रतिषेधवाचिनो विद्यमानत्वात् । महदशनमस्येति महाशनः, कल्पान्ते सर्वग्रसनात् । सर्वेषां बुद्धीन्द्रियाणामगम्यः अदृश्यः । स्थूलरूपेण व्यक्तं स्वरूपमस्येति व्यक्तरूपः, स्वयंप्रकाशत्वात् । योगिनां व्यक्तरूपत्वादिति वा व्यक्तरूपः । सुरारीणां सहस्राणि युद्धे जयतीति सहस्रजित् । सर्वाणि भूतानि

**युगादिकृद्युगावर्तो नैकमायो महाशनः ॥ अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ४६ ॥**

**इष्टो विशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ॥ क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ४७ ॥**

युद्धक्रीडादिषु सर्वत्राचिन्त्यशक्तितया जयतीत्यनन्तजित् ॥ ४६ ॥ परमानन्दकत्वेन प्रिय इष्टः, यज्ञेन पूजित इति वा इष्टः । सर्वेषामन्तर्यामित्वेन विशिष्टः । शिष्टानां विदुषामिष्टः शिष्टेष्टः । शिष्टा इष्टा अस्येति वा शिष्टेष्टः 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति भगवद्वचनात् । शिष्टैरिष्टः पूजित इति वा शिष्टेष्टः । शिखण्डः कलापोऽलङ्कारोऽस्येति शिखण्डी गोपवेषधरो यतः । नह्यति भूतानि माययाऽतो नहुषः । कामानां वर्षणाद्वृषो धर्मः 'वृषो हि भगवान् धर्मः स्मृतो लोकेषु भारत । नैघण्टुकपदाख्यातैर्विद्धि मां वृषमित्युत' इति महाभारते । साधूनां क्रोधं

वि०स० हन्तीति क्रोधहा । असाधुषु क्रोधं करोतीति क्रोधकृत् । क्रियत इति कर्म जगत् तस्य कर्ता 'एषां पुरुषाणां यः कर्त्ता
॥२०॥ यस्य वै तत्कर्म स वै वेदितव्यः' इति श्रुतेः । क्रोधकृतां दैत्यादीनां कर्त्ता छेदक इत्येकं वा नाम । विश्वेषामालम्बनत्वेन वि- भा०
श्वे बाहवोऽस्येति विश्वतो बाहवोऽस्येति वा विश्वबाहुः 'विश्वतोबाहुः' इति श्रुतेः । महीं पूजां धरणीं वा धत्त
इति महीधरः ॥ ४७ ॥ षड्भावविकाररहितत्वादच्युतः 'शाश्वतं शिवमच्युतम्' इति श्रुतेः । जगदुत्पत्त्यादिकर्मभिः
प्रख्यातः प्रथितः । सूत्रात्मना प्रजाः प्राणयतीति प्राणः 'प्राणो वा अहमस्मि' इति बहृचाः 'वायुर्वै गौतम
तत्सूत्रम्' इति श्रुतेः ॥ ( ३३० ) ॥ सुराणामसुराणां च यथासंख्यं प्राणं बलं च ददाति द्यति वेति प्राणदः । आदि-

**अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ॥ अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ४८ ॥**
**स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ॥ वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ४९ ॥**

त्यां कश्यपाद्वासवस्यानुजो जात इति वासवानुजः । आपो यत्र निधीयन्ते सोऽपांनिधिः 'सरसामस्मि सागरः'
इति भगवद्वचनम् । अधितिष्ठन्ति भूतानि उपादानकारणत्वेन ब्रह्मेत्यधिष्ठानम् 'मत्स्थानि सर्वभूतानि' इति भग-
वद्वचनात् । अधिकारिभ्यः कर्मानुरूपं फलं प्रयच्छन्न प्रमाद्यतीति अप्रमत्तः । स्वे महिम्नि स्थितः प्रतिष्ठितः 'स-
भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' इति श्रुतेः ॥ ४८ ॥ स्कन्दत्यमृतरूपेण गच्छति वायुरूपेण शोषयतीति ॥२
वा स्कन्दः । स्कन्दं धर्मपथं धारयतीति स्कन्दधरः । धुरं वहति समस्तभूतजन्मादिलक्षणामिति धुर्यः । अभिमतान्

वरान् ददातीति वरदः। वरां गां दक्षिणां ददाति यजमानरूपेणेति वा वरदः 'गौर्वै वरा' इति श्रुतेः॥ (३४०)॥ मरुतः सप्तावहादीन् वाहयतीति वायुवाहनः। वसति वासयत्याच्छादयतीति वा स्वयमिति वासुः, दीव्यति क्रीडते विजिगीषते व्यवहरति द्योतते स्तूयते गच्छतीति वा देवः, वासुश्चासौ देवश्च वासुदेवः 'छादयामि जगत्सर्वं भूत्वा सूर्य इवांशुभिः। सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः। वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः। वासुदेवस्ततो ज्ञेयो योगिभिस्तत्त्वदर्शिभिः' इत्युद्योगपर्वणि। 'सर्वत्रासौ समस्ते च वसत्यत्रेति वै यतः। ततः स वासुदेवेति विद्वद्भिः परिपठ्यते। सर्वाणि तत्र भूतानि वसन्ति परमात्मनि। भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः'

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः॥ अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः॥ ५०॥

इति च विष्णुपुराणे। 'बृहन्तो भानवो यस्य चन्द्रसूर्यादिगामिनः। विश्वं जगद्भासयाति स बृहद्भानुरुच्यते॥' आदिः कारणं स चासौ देवश्चेत्यादिदेवः द्योतनादिगुणवान् वा देवः। सुरशत्रूणां पुरगणां दारणात्स पुरन्दरः। 'वाचंयमपुरन्दरौ च' इति भगवता पाणिनिना निपातनात्॥ ४९॥ शोकादिषडूर्मिवर्जितोऽशोकः। संसारसागरात्तारयतीति तारणः। गर्भजन्मजरामृत्युलक्षणाद्भयात् तारयतीति तारः। शूरो विक्रमवत्तया। यद्वा शूरस्यापत्यं वसुदेवरूपः शूरकुलोद्भवत्वाच्छौरिः। जनानां जन्तूनामीश्वरो जनेश्वरः। आत्मत्वेन हि सर्वेषामनुकूलः, न हि स्वस्मिन्प्रातिकूल्यं स्वयमाचरतीत्यनुकूलः। धर्मत्राणाय शतमावर्तनानि प्रादुर्भावा अस्येति शतावर्तः। यद्वा नाडीशते प्राणः

रूपेणावर्तत इति वा । पद्मं हस्ते विद्यते इति पद्मी । पद्मनिभे ईक्षणे दृशावस्येति पद्मनिभेक्षणः ॥ ५० ॥ पद्मस्य नाभौ मध्ये कर्णिकायां स्थित इति पद्मनाभः । पद्माक्षत्वादरविन्दाक्षः । पद्मस्य हृदयाख्यस्य मध्ये कर्णिकायाम् उपास्यत्वात्पद्मगर्भः । पोषयन्नन्नरूपेण प्राणरूपेण वा शरीरिणां शरीराणि धारयञ्छरीरभृत्, स्वया मायया शरीराणि बिभर्तीति वा शरीरभृत् । महती ऋद्धिर्विभूतिरस्येति महर्द्धिः ॥ ( ३५० ) ॥ प्रपञ्चरूपेण ऋद्धः । वृद्धः पुरातन आत्मा यस्येति वृद्धात्मा । महती अक्षिणी महान्त्यक्षीणि वाऽस्येति महाक्षः । गरुडाङ्को ध्वजो यस्येति गरुडध्वजः ॥ ५१ ॥ तुला उपमानमस्य न विद्यते इत्यतुलः । 'न तस्य प्रतिमाऽस्ति यस्य नाम महद्यशः' इति श्रुतेः । 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इति

**पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ॥ महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ५१ ॥**
**अतुलः शरभो भीमः समयज्ञो हविर्हरिः ॥ सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिंजयः ॥ ५२ ॥**

स्मृतेश्च । शरीराणि शराणि शीर्यमाणत्वात्तेषु प्रत्यगात्मतया भातीति शरभः । बिभेत्यस्मात्सर्वमिति भीमः । 'भीमादयोऽपादाने' इति पञ्चमीसमासवर्ति नाम । समयं मरणयोगं जानाति सृष्टिस्थित्यन्तकालवित्, षट् समयान् जानातीति वा समयज्ञः । सर्वभूतेषु समत्वं यजनं साधनस्येति वा । 'समत्वमाराधनमच्युतस्य' इति प्रह्लादवचनम् । यज्ञेषु हविर्भागं हरतीति हविर्हरिः । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति भगवद्वचनात् । अथवा हूयते हविषेति हविः । 'अबध्नन्पुरुषं पशुम्' इति हविष्ट्वं श्रूयते । स्मृतिमात्रेण पुंसां पापं हरतीति हरिद्वर्णाद्वा हरिः । 'हराम्यघं हि स्मर्तॄणां हविर्भागं क्रतुष्वहम् ।

वर्णश्च मे हरित् श्रेष्ठस्तस्माद्धारिरहं स्मृतः' इति व्यासवचनात् । सर्वैर्लक्षणैः प्रमाणैर्लक्षणं ( दर्शनं ) ज्ञानं जायते यत्तद्विनिर्दिष्टं सर्वलक्षणलक्षणं, तत्र साधुः सर्वलक्षणलक्षण्यः तस्यैव परमार्थत्वात् ॥ ( ३६० ) ॥ लक्ष्मीर्यस्य नित्यं वक्षसि वसतीति लक्ष्मीवान् । समितिं युद्धं जयतीति समितिंजयः ॥ ९२ ॥ विगतः क्षरो नाशो यस्यासौ विक्षरः । स्वच्छन्दतया रोहितां मूर्तिं मत्स्यविशेषमूर्तिं वा वहन् रोहितः । मुमुक्षवस्तं देवं मार्गयन्ति इति मार्गः, परमानन्दो येन प्राप्यते स मार्ग इति वा । उपादानं निमित्तं च कारणं स एवेति हेतुः । दमादिसाधनेनोत् अरा उत्कृष्टा मतिर्या तया गम्यत इति दामोदरः । 'दमाद्दामोदरं विष्णुः' इति महाभारते, यशोदया दाम्नोदरे बद्धः इति वा दामोदरः। 'तयोर्मध्यगतं बद्धं दाम्ना गाढं तयोदरे । ततश्च दामोदरतां

**विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ॥ महीधरो महाभागो वेगवानमिताशनः ॥ ९३ ॥**

स ययौ दामबन्धनात्' इति ब्रह्मपुराणे । 'दामानि लोकनामानि तानि यस्योदरान्तरे । तेन दामोदरो देवः श्रीधरस्तु समाश्रितः' इति व्यासवचनाद्वा दामोदरः । सर्वानभिभवति क्षमत इति वा सहः । महीं गिरिरूपेण धत्ते इति महीधरः । 'वनानि विष्णुर्गिरयो दिशश्च' इति पराशरोक्तेः । स्वेच्छया धारयन्महीं देहं वा । महान्ति प्रकृष्टानि भोजनानि विभागजन्यानि भुङ्क्ते इति महाभागः, महान् भागो भाग्यमस्यावतारेष्विति वा महाभागः ॥ ( ३७० ) ॥ वेगो जवस्तद्वान् वेगवान् । 'अनेजदेकं मनसो जवीयः' इति श्रुतेः' । संहारसमये विश्वमश्नातीत्यमिताशनः ॥ ९३ ॥

प्रपञ्चोत्पत्त्युपादानकारणत्वाद्धुद्भवः उद्भूतो भवात् संसारादिति वा। सर्गकाले प्रकृतिं पुरुषं च प्रविश्य क्षोभयामासेति क्षोभणः। 'प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः। क्षोभयामास भगवान् सर्गकाले व्ययाव्ययौ।" इति विष्णुपुराणे। यतो दीव्यति क्रीडति सर्गादिभिर्विजिगीषतेऽसुरादीन् व्यवहरति सर्वभूतेषु आत्मतया द्योतते स्तूयते स्तुत्यैः सर्वत्र गच्छति तस्माद्देवः। 'एको देवः।' इति मन्त्रवर्णात्। श्रीर्विभूतिर्यस्योदरान्तरे जगद्रूपा स्थिता स श्रीगर्भः। परमश्चासौ ईशनशीलश्चेति परमेश्वरः। 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' इति भगवद्वचनात्। जगदुत्पत्तौ साधकतमं करणम् उपादानकारणं निमित्तकारणं चेति कारणम्। कर्ता स्वतन्त्रः॥ (३८०)॥ विचित्रं भुवनं कृतवानिति विकर्ता। स्वरूपं सामर्थ्यं चेष्टितं वा तस्य ज्ञातुं न शक्यते इति गहनः।

उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः॥ करणं कारणं कर्ता विकर्ता गहनो गुहः॥ ५४॥
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः॥ परार्द्धिः परमस्पष्टः स्तुष्टः पुष्टः शुभेक्षणः॥५५॥

गूहते संवृणोति स्वरूपादीनि माययेति गुहः। 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः' इति भगवद्वचनात्॥ ५४॥ संविन्मात्रस्वरूपत्वाद्व्यवसायः। यस्मिन्व्यवस्थितिः सर्वस्येति व्यवस्थानः। लोकपालाद्यधिकारजरायुजाण्डजस्वेदजोद्भिज्जब्राह्मणक्षत्रियवैश्यशूद्रावान्तरवर्णब्रह्मचारिगृहस्थवानप्रस्थसंन्यासलक्षणाश्रमतद्धर्मादिकान् विभज्य करोतीति वा व्यवस्थानः 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणात्कर्तरि ल्युट्प्रत्ययः। यत्र भूतानां संस्थितिः प्रलयात्मिका, समीचीनं स्थानमस्येति वा संस्थानः। ध्रुवादीनां कर्मानुरूपं स्थानं ददातीति स्थानदः। अविनाशित्वाद्ध्रुवः। परा ऋद्धिर्विभूतिरस्येति परार्द्धिः। परा मा लक्ष्मीः

शोभा वाऽस्येति परमः सर्वोत्कृष्टो वा, अनन्याधीनसंसिद्धित्वात्संविदात्मतया परमस्पष्टः ( ३९० ) परमानन्दैकरूपत्वात्तुष्टः । सर्व-संपूर्णत्वात्पुष्टः । ईक्षणं दर्शनं यस्य सर्वं शुभं शुभकरं नराणां मुमुक्षूणां मोक्षदं भोगार्थिनां भोगदं सन्देहविच्छेदकारणं पावनं हृदयग्रन्थेर्विच्छेदकरं सर्वकर्मणां क्षपणम् अविद्यानिवर्तकं स शुभेक्षणः । 'भिद्यते हृदयग्रन्थिः' इत्यादिस्मृतेः ॥५५॥ नित्यानन्दे-ऽस्मिन्योगिनो रमन्त इति रामः । 'रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि । इति रामपदेनैतत्परं ब्रह्माभिधीयते' इति पद्म-पुराणे, स्वेच्छया वपुर्वहन् वा दाशरथी रामः । विरामः अवसानं प्राणिनां यस्मिन्निति विरामः।विगतं रजो यस्य विषयसेवायामिति

**रामो विरामो विरजो मार्गो नेयो नयोऽनयः ॥ वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ५६ ॥**
**वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ॥ हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ५७ ॥**

विरजः । 'विरजः पर आकाशात्' इति श्रुतेः । यं विदित्वाऽमृतत्वाय कल्पन्ते मुमुक्षवः स एव पन्था मार्गः। 'नान्यः पन्था विद्यते-ऽयनाय' इति श्रुतेः । मार्गेण सम्यक् ज्ञानेन जीवः परमात्मतया नीयत इति नेयः । नयतीति नयो नेता । मार्गो नेयो नय इति त्रिरूपः परिकल्प्यते,नास्य नेता विद्यते इत्यनयः॥(४००)॥इति नाम्नां चतुर्थं शतं विवृतम्॥विक्रमशालित्वाद्वीरः।शक्तिमतां विरिञ्च्या-दीनामपि शक्तिमत्त्वाच्छक्तिमतां श्रेष्ठः।सर्वभूतानां धारणाद्धर्मः।'अणुरेष धर्मः' इति श्रुतेः । धर्मैराराध्यत इति वा धर्मः । श्रुतयः स्मृतयश्च यस्याज्ञाभूताः स एव सर्वधर्मविदामुत्तमः इति धर्मविदुत्तमः॥५६॥ विविधा कुण्ठा गतेः प्रतिहतिर्विकुण्ठा विकुण्ठायाः कर्ते-

ति वैकुण्ठः, जगदारम्भे विश्लिष्टानि भूतानि परस्परं संश्लेषयन् तेषां गतिं प्रत्यबध्नादिति।'मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना। वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम' इति शान्तिपर्वणि। सर्वस्मात्पुरा सदनात्सर्वपापस्य सादनाद्वा पुरुषः। 'स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मन औषं तस्मात्पुरुषः' इति श्रुतेः। पुरि शयनाद्वा पुरुषः 'स वा अयं पुरुषः सर्वासु पूर्षु पुरीशयः' इति श्रुतेः। प्राणिति निःक्षेत्रज्ञरूपेण प्राणात्मना चेष्टयन्वा प्राणः। 'चेष्टां करोति श्वसनरूपेण' इति विष्णुपुराणे। द्यति खण्डयाति प्राणिनां प्राणान्प्रलयादिषु इति प्राणदः। प्रणौति प्रणमतीति वा प्रणवः। 'तस्मादोमिति प्रणौति' इति श्रुतेः। प्रणम्यते इति वा प्रणवः 'प्रणमन्तीह यं वेदाः सोऽस्मात्प्रणव उच्यते' इति सनत्कुमारवचनात्। प्रप-

ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः॥ उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः॥ ९८॥

ञ्चरूपेण विस्तृतत्वात्पृथुः॥ (४१०)॥ हिरण्यगर्भसम्भूतिकारणं हिरण्मयमण्डं यद्वीर्यसम्भूतं तदस्य गर्भ इति हिरण्यगर्भः। त्रिदशशत्रून् हन्तीति शत्रुघ्नः। कारणत्वेन सर्वकार्याणां व्याप्तत्वाद्व्याप्तः। वाति गन्धं करोतीति वायुः। 'पुण्यो गन्धः पृथिव्यां च' इति भगवद्वचनात्। 'अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः' इति उद्योगपर्वणि। 'द्यौरन्तरिक्षं पृथिवी वाऽधस्तयोर्यस्मादजायत। मध्ये वैराजरूपेण' इति वाऽधोक्षजः। अधोभूते प्रत्यक्प्रवाहिते अक्षगणे जायत इति अधोक्षजः 'अधोभूते ह्यक्षगणे प्रत्यग्रूपप्रवाहिते। जायते तस्य वै ज्ञानं तेनाधोक्षज उच्यते'॥ ९७॥ कालात्मना ऋतुशब्देन लक्ष्यत इति ऋतुः। शोभनं निर्वाणफलं दर्शनं ज्ञानमस्येति सुदर्शनः, शुभे दर्शने ईक्षणे

पद्मपत्रायते अस्येति वा । स्वेच्छया सुन्दरं देहं वहति सुखेन दृश्यते भक्तैरिति वा, सुदर्शनः । कलयति सर्वमिति कालः । 'कालः कलयतामहम्' इति भगवद्वचनात् । परमे प्रकृष्टे स्वे महिम्नि हृदयाकाशे स्थातुं शीलमस्येति परमेष्ठी 'परमेष्ठी विभाजतं' इति मन्त्रवर्णात् । शरणार्थिभिः परितो गृह्यते, सर्वगतत्वात्परितो ज्ञायते इति वा, पत्रपुष्पादिकं भक्तैरर्पितं परिगृह्णातीति वा परिग्रहः ॥ ( ४२० ) ॥ सूर्यादीनामपि भयहेतुत्वादुग्रः । 'भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः' इति श्रुतेः । संवसन्ति भूतान्यस्मिन्निति संवत्सरः । जगद्रूपेण वर्धमानत्वात्सर्वकर्माणि क्षिप्रं करोतीति वा दक्षः । संसारसागरे क्षुत्पिपासादिषडूर्मिभिस्तरङ्गितैः अविद्याद्यैर्महाक्लेशैर्महदादिभिरुपक्लेशैश्च वशीकृतानां

**विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम् ॥ अर्थोऽनर्थो महाकोशो महाभोगो महाधनः॥५९॥**
**अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः ॥ नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ६० ॥**

विश्रान्तिं कांक्षमाणानां विश्रामं मोक्षं करोतीति विश्रामः । विश्वस्माद्दक्षिणः शक्तो, विश्वेषु कर्मसु दाक्षिण्याद्वा विश्वदक्षिणः ॥ ५८ ॥ विस्तीर्यन्ते समस्तानि जगन्ति यस्मिन्निति विस्तारः । स्थितिशीलत्वात्स्थावरः, स्थितिशीलानि पृथिव्यादीनि तिष्ठन्त्यस्मिन्निति स्थाणुः, स्थावरश्चासौ स्थाणुश्चेति स्थावरस्थाणुः । संविदात्मना प्रमाणं प्रत्यक्षादि प्रमाणं वा । अन्यथाभावव्यतिरेकेण कारणमिति बीजमव्ययम् । सुखरूपत्वात्सर्वैरर्थ्यत इति अर्थः ॥ ( ४३० ) ॥ न विद्यते अर्थः प्रयोजनमाप्तकामत्वादस्येत्यनर्थः । महान्तः कोशा अन्नमयादयः छादका अस्येति महाकोशः । महान् भोगः सुखरूपोऽस्येति महाभोगः । महद्भोगसाधनलक्षणं धनमस्येति महाधनः ॥ ५९ ॥ अवाप्तसर्वकामत्वान्नि-

विश्व० ॥२४॥

वेदोऽस्य न विद्यत इत्यनिर्विण्णः । वैराजरूपेण स्थितः स्थविष्ठः । 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति श्रुतेः । अजन्मा अभूः, अथवा भवतीति भूः 'भू सत्तायां' संपदादित्वाद्भवतेः क्विप्, मही वा । यूपे पशुवत् समाराधनात्मका धर्मास्तत्र बध्यन्त इति धर्मयूपः । यस्मिन्नर्पिता महामखा यज्ञा निर्वाणलक्षणं फलं प्रयच्छन्तो महान्तो जायन्ते स महामखः । 'नक्षत्रतारकैः सार्धं चन्द्रसूर्यादयो ग्रहाः । वायुपाशमयैर्बन्धैर्निबद्धा ध्रुवसंज्ञिते' । स ज्योतिषां चक्रं भ्रामयंस्ताराामयस्य शिंशुमारस्य पुच्छदेशे व्यवस्थितो ध्रुवः, तस्य शिंशुमारस्य ज्योतिश्चक्रस्य नेमिवद्वर्तमानस्य हृदयं विष्णुरिति कथितो नक्षत्रनेमिः । शिंशुमारवर्णने विष्णुहृदयामिति स्वाध्यायब्राह्मणे श्रूयते ॥ ( ४४० ) ॥ चन्द्ररूपेण

**यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतांगतिः ॥ सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ६१ ॥**

नक्षत्री । 'नक्षत्राणामहं शशी' इति भगवद्वचनात् । समस्तकार्येषु समर्थः क्षमः । क्षमत इति वा क्षमः । 'क्षमया पृथिवीसमः' इति वाल्मीकिवचनात् । सर्वविकारेषु क्षयितेषु स्वात्मनाऽवस्थित इति क्षामः । 'क्षायो मः' इति निष्ठायां तकारस्य मकारादेशः । सृष्ट्याद्यर्थे सम्यगीहते समीहनः ॥ ६० ॥ सर्वयज्ञस्वरूपत्वाद्यज्ञः । सर्वेषां देवानां यज्ञाकारेण वर्तत इति वा यज्ञः । 'यज्ञो वै विष्णुः' इति श्रुतेः । यष्टव्योऽप्ययमेव यज्ञफलदातृत्वादितीज्यः 'ये यजन्ति मखैः पुण्यैर्देवतादीन् पितॄनपि । आत्मानमात्मना नित्यं विष्णुमेव यजन्ति ते' इति हरिवंशे । सर्वासु देवतासु यष्टव्यासु प्रकर्षेणायमेव यष्टव्यो मोक्षफलदातृत्वादिति महेज्यः । यूपसहितो यज्ञः क्रतुः । असनोपायिचो-

भा० ॥२५

दनालक्षणं सत्रम् । सतस्त्रायत इति वा सत्रम् । सतां मुमुक्षूणां नान्या गतिरिति सतांगतिः ॥ (४९०) ॥ सर्वेषां प्राणिनां कृताकृतं सर्वं पश्यति स्वाभाविकेन बोधेनेति सर्वदर्शी । स्वभावेन विमुक्तश्चासावात्माऽस्येति विमुक्तात्मा । 'विमुक्तश्च विमुच्यते' इति श्रुतेः । सर्वश्चासौ ज्ञश्चेति सर्वज्ञः । 'इदं सर्वं यदयमात्मा' इति श्रुतेः । ज्ञानमुत्तममित्येतत्सविशेषणमेकं नाम । ज्ञानं प्रकृष्टम् अजन्यम् अनवच्छिन्नं सर्वस्य साधकतममिति ज्ञानमुत्तमम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः ॥६१॥ शोभनं व्रतमस्येति सुव्रतः । 'सकृदेव प्रपन्नाय तवास्मीति तु याचते । अभयं सर्वथा तस्मै ददाम्येतद्व्रतं मम' इति श्रीरामायणे रामवचनम् । शोभनं मुखमस्येति सुमुखः । 'प्रसन्नवदनं चारु पद्मपत्रायतेक्षणम्' इति श्रीविष्णुपुराणे ।

**सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ॥ मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ६२ ॥**

वनवासे सुमुखत्वाद्वा दाशरथी रामः सुमुखः । 'स पितुर्वचनं श्रीमानभिषेकपरं प्रियम् । मनसा पूर्वमासाद्य वाचा प्रतिगृहीतवान् ॥ इमानि तु महारण्ये विहृत्य नव पञ्च च । वर्षाणि परमप्रीतः स्थास्यामि वचने तव ॥ न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् । सर्वलोकातिगस्यैव मनो रामस्य विव्यथे ॥' इति न व्यथां प्राप्तवान् इति रामायणे महाभारते च । सर्वविद्योपदेशेन वा सुमुखः । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्यादिश्रुतेः । शब्दादिस्थूलकारणरहितत्वाच्छब्दादयो ह्याकाशादीनामुत्तरोत्तरस्थूलत्वकारणानि तदभावात्सूक्ष्मः । 'सर्वगतं सूक्ष्मम्' इति श्रुतेः । शोभनो घोषो वेदात्मकोऽस्येति, मेघगम्भीरघोषत्वाच्च सुघोषः । सद्वृत्तानां सुखं ददात्यसद्वृत्तानां सुखं

५

वि०स० ॥२९॥

खण्डयतीति वा सुखदः । प्रत्युपकारानिरपेक्षतयोपकारित्वात्सुहृत् ॥ (४६० ) ॥ निरतिशयानन्दरूपत्वान्मनो हरतीति मनोहरः । 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति' इति श्रुतेः । जितः क्रोधो येन स जितक्रोधः । वेदमर्यादास्थापनार्थं न तु कोपवशादित्यतस्त्रिदशशत्रून्निघ्नन्वेदमर्यादां स्थापयन् विक्रमशाली बाहुरस्येति वीरबाहुः । अधार्मिकान् विदारयन्विदारणः ॥ ६२ ॥ प्राणिनः स्वापयन्नात्मसम्बोधविधुरान् मायया कुर्वन् स्वापनः । स्वतन्त्रः स्ववशः । जगदुत्पत्तिस्थितिलयहेतुत्वात् आकाशवत्सर्वगतत्वाद्व्यापी । 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतेः । कारणत्वेन सर्वकार्याणां व्यापनाद्वा व्यापी । जगदुत्पत्त्याद्यनेकरूपाणि निमित्तविभूतिभिः अनेकधा तिष्ठन्नैकात्मा । जगदुत्पत्तिसम्पत्ति-

स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ॥ वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥६३॥
धर्मगुब् धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ॥ अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ६४ ॥

विपत्तिप्रभृतिकर्माणि करोतीति नैककर्मकृत् । वसत्यत्राखिलमिति वत्सरः, वत्सं रातीति वा ॥ (४७० ) ॥ भक्तस्नेहित्वाद्वत्सलः । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययविधानात् । वत्सानां पालनाद्वत्सी । जगत्पितुस्तस्य वत्सभूताः प्रजाः इति वा वत्सी । रत्नानि गर्भभूतानि अस्येति रत्नगर्भः । धनानामीश्वरः धनेश्वरः ॥ ६३ ॥ धर्मं गोपायतीति धर्मगुप् । 'धर्मसंस्थापनार्थाय संभवामि युगे युगे' इति भगवद्वचनात् । धर्माधर्मविहीनोऽपि धर्ममर्यादास्थापनार्थं धर्ममेव करोतीति धर्मकृत् । धर्मान् धारयिता धर्मी । अवितथं परं ब्रह्म सत् । 'सदेव सौम्येदम्' इति श्रुतेः ।

अपरं ब्रह्मासत् प्रपञ्चरूपेण । 'वाचारम्भणं विकारो नामधेयम्' इति श्रुतेः। सर्वाणि भूतानि क्षरम्। (४८०) कूटस्थोऽक्षरम्। 'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इति भगवद्वचनात्। आत्मनि कर्तृत्वादिविज्ञानं कल्पितमिति तद्वासनावकुण्ठितो जीवोऽविज्ञाता। आदित्यादिगता अंशवोऽस्यैवेत्ययमेव मुख्यः सहस्रांशुः। 'येन सूर्यस्तपति तेजसेद्धः' इति श्रुतेः। 'यदादित्यगतं तेजः' इत्यादिस्मृतेश्च। विशेषेण शेषदिग्गजभूधरान् सर्वभूतानि वा दधातीति विधाता। नित्यनिष्पन्नचैतन्यरूपत्वात्कृतलक्षणः। कृतानि लक्षणानि शास्त्राण्यनेनेति वा कृतलक्षणः। 'वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात्' इत्यत्रैव वक्ष्यति। सजातीयविजातीयव्यवच्छेदकं लक्षणं सर्वभावनाकृतमनेनेति वा कृतलक्षणः। आत्मनः श्रीवत्सलक्षणं वक्षसि तेन कृतमिति वा कृतलक्षणः॥ ६४॥ गभस्तिचक्रस्य मध्ये सूर्यात्मना स्थित इति गभस्तिनेमिः। सत्त्वं गुणप्रकाशकं प्राधान्येनाधितिष्ठतीति, सर्वप्राणिषु तिष्ठतीति वा सत्त्वस्थः। विक्रमशीलत्वात्सिंहवत्सिंहः। नृशब्दलोपेन सत्यभामा भामेतिवद्वा नृसिंहः सिंहः। भूतानां महानीश्वरो भूतेन सत्येन स एव परमो महानीश्वर इति वा भूतमहेश्वरः। सर्वभूतान्यादीयन्तेऽनेनेत्यादिः, आदिश्चासौ देवश्चेत्यादिदेवः॥ ॥ (४९०)॥ सर्वान्भावान् परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते इति महेश्वरः। 'तस्माद्धुच्यते महादेवः' इति श्रुतेः। देवानां प्राधान्याद्देवानामीशो देवेशः। देवान् बिभर्तीति देवभृत् शक्रस्तस्यापि शासितेति देवभृद्गुरुः, देवानां भरणात्सर्ववि-

**गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः॥ आदिदेवो महादेवो देवेशो देवभृद्गुरुः॥ ६५॥**

द्यानां भरणाद्वा देवभृद्गुरुः ॥ ६५ ॥ जन्मसंसारसागरादुत्तारयतीत्युत्तरः, सर्वोत्कृष्ट इति वा उत्तरः। 'विश्वस्मादिन्द्र उत्तरः' इति श्रुतेः । गवां पालनाद्गोपवेषधरो गोपतिः, गौर्मही तस्याः पतित्वाद्वा गोपतिः । समस्तभूतानि पालयन् जनको जगतः इति गोप्ता । न कर्मणा न ज्ञानकर्मभ्यां वा गम्यते ज्ञानेनैव गम्यते इति ज्ञानगम्यः । कालेनापरीच्छिन्नत्वात् पुरा भवतीति पुरातनः । शरीरारम्भकभूतानां भरणात् प्राणरूपधरः शरीरभूतभृत् । पालको भोक्ता, निरातिशयानन्दसन्दोहसम्भोगाद्वा भोक्ता । इति नाम्नां पञ्चशतं विवृतम् ॥ (५००) ॥ कपिर्वराहः इन्द्रश्चेति कपीन्द्रो वराहमूर्तिः,

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ॥ शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ६६ ॥
सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ॥ विनयो जयः सत्यसन्धो दाशार्हः सात्वतांपतिः ॥६७॥

कपीनां वानरादीनां चेन्द्रः कपीन्द्रो राघवो वा । भूरयो यज्ञदक्षिणाः धर्ममर्यादां दर्शयतो यज्ञं कुर्वतो विद्यन्त इति भूरिदक्षिणः ॥ ६६ ॥ सोमं पिबति सर्वयज्ञेषु यष्टव्यत्वाद्देवतारूपेणेति सोमपः । धर्ममर्यादां दर्शयन् यजमानरूपेण वा सोमपः । स्वात्मामृतरसं पिबन्नमृतपः, मथितममृतमसुरैर्ह्रियमाणं रक्षित्वा देवान् पाययित्वा स्वयमप्यपिबदिति वा । सोमरूपेणौषधीः पोषयन् सोमः, उमया सह वर्तत इति शिवो वा सोमः । पुरून् बहून् जयतीति पुरुजित् । विश्वरूपत्वात्पुरुः, उत्कृष्टत्वात्सत्तमः, पुरुश्चासौ सत्तमश्चेति पुरुसत्तमः । विनयं दण्डं दुष्टानां प्रजानां करोतीति विनयः ।

समस्तान्न जयतीति जयः । सत्या सन्धा सङ्कल्पो यस्येति सत्यसन्धः । 'सत्यसङ्कल्पः' इति श्रुतेः ॥ (९१०) ॥ दाशो दानं तदर्हतीति दाशार्हः, 'दाशृ दाने' इति धातुपाठात् दाशार्हकुलोद्भवत्वाद्वा दाशार्हः । सात्वतं नाम तन्त्रं, 'तत्करोति तदाचष्टे' इति णिचि कृते 'क्विप्च' इति क्विप्प्रत्यये कृते च 'णेरनिटि' इति णिलोपे च कृते पदं सात्वन्तः तेषां पतिर्योगक्षेमकर इति सात्वतांपतिः ॥ ६७ ॥ प्राणान् क्षेत्रज्ञरूपेण धारयन् जीवः । विनयित्वं विनयितानां च साक्षात्पश्यति प्रजानामिति विनयितासाक्षी । अथवा नयतेर्गतिवाचिनो रूपम् । विनायिता असाक्षी असाक्षाद्द्रष्टा आत्मातिरिक्तं वस्तु न पश्यतीत्यर्थः । मुक्तिं ददातीति मुकुन्दः । पृषोदरादित्वात्साधुत्वं वर्णाक्षरसाम्यान्निरुक्तिवचनान्नैरुक्तानां मु-

**जीवो विनयिताऽसाक्षी मुकुन्दोऽमितविक्रमः ॥ अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥६८॥**

**अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ॥ आनन्दो नन्दनोऽनन्दः सत्यधर्मा त्रिविक्रमः ॥६९॥**

कुन्द इति निरुक्तिः । अमिता अपरिच्छिन्ना विक्रमास्त्रयः पादविक्षेपा अस्येत्यामितविक्रमः । अमितं विक्रमणं शौर्यमस्येति वाऽमितविक्रमः । अम्भांसि देवादयोऽस्मिन्निधीयन्त इत्यम्भोनिधिः । 'तानि ह वा एतानि चत्वार्यम्भांसि । देवा मनुष्याः पितरोऽसुराः' इति श्रुतेः । सागरो वा । 'सरसामस्मि सागरः' इति भगवद्वचनात् । देशतः कालतो वस्तुतश्चापरिच्छिन्नत्वादनन्तात्मा । संहृत्य सर्वभूतान्येकार्णवं जगत्कृत्वाऽधः शेते इति महोदधिशयः । अन्तं करोति भूतानामित्यन्तकः 'तत्करोति तदाचष्टे' इति णिचि प्रत्यये कृते 'ण्वुल्तृचौ' इति ण्वुल् । तस्य 'युवोरनाकौ' इत्यकादेशः (९२०) ॥ ६८ ॥ आद्विष्णोरजायतेति कामोऽजः । महः पूजा तदर्हत्वान्महार्हः । स्वभावेनैव भाव्यो नित्यनि-

ष्पन्नरूपत्वादिति स्वाभाव्यः । निर्जिता अमित्रा अन्तर्वर्तिनः रागद्वेषादयो बाह्या रावणादयश्च येनासौ जितामित्रः । स्वात्मामृतरसास्वादान्नित्यं प्रमोदते, ध्यायिनां ध्यानमात्रेण प्रमोदं कुरुत इति वा प्रमोदनः । आनन्दस्वरूपमस्येत्यानन्दः । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । नन्दयतीति नन्दनः । सर्वाभिरुपपत्तिभिः समृद्धो नन्दः, सुखं वैषयिकं नास्य विद्यत इति वा अनन्दः । 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति' इति श्रुतेः । सत्या धर्मा ज्ञानादयोऽस्येति सत्यधर्मा । त्रयो विक्रमास्त्रिषु लोकेषु क्रान्ता यस्य स त्रिविक्रमः । 'त्रीणि पदा विचक्रमे' इति श्रुतेः । 'त्रिरित्येव त्रयो लोकाः कीर्तिता मुनिसत्तमैः । क्रमसे तांस्तथा सर्वांस्त्रिक्रमोऽसि जनार्दन' इति हरि-

**महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ॥ त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ७० ॥**

वंशे ( ९३० ) ॥ ६९ ) महर्षिः कपिलाचार्य इति सविशेषणमेकं नाम । महांश्चासावृषिश्चेति महर्षिः, कृत्स्नस्य वेदस्य दर्शनात्, अन्ये तु वेदैकदर्शनादृषयः । कपिलश्चासौ सांख्यस्य शुद्धतत्त्वविज्ञानस्याचार्यश्चेति कपिलाचार्यः । 'शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते' इति व्यासस्मृतेः, 'ऋषिप्रभूतं कपिलं महान्तम्' इति श्रुतेश्च, 'सिद्धानां कपिलो मुनिः' इति स्मृतेश्च । कृतं कार्यं जगत्, ज्ञः आत्मा, कृतं च ज्ञश्चेति कृतज्ञः । मेदिन्याः भूम्याः पतिर्मेदिनीपतिः । त्रीणि पदान्यस्येति त्रिपदः । 'त्रीणि पदा विचक्रमे' इति श्रुतेः । गुणावेशेन संजातास्तिस्रो दशा अवस्थास्तासामध्यक्ष इति त्रिदशाध्यक्षः । मत्स्यरूपी महति शृङ्गे प्रलयाम्भोधौ नावं बद्ध्वा चिक्रीड इति महाशृङ्गः । कृतस्यान्तं संहारं

करोतीति कृतान्तकृत् । कृतान्तं मृत्युं कृन्तति वा कृतान्तकृत् ॥ ७० ॥ महांश्चासौ वराहश्चेति महावराहः । गोभिर्वाणीभिर्विन्दते, वेत्ति वेदान्तवाक्यैरिति वा गोविन्दः । 'गोभिरेव यतो वेद्यो गोविन्दः स उदाहृतः' इति विष्णुतिलके । शोभना सेना गणात्मिका यस्येति सुषेणः ॥ ( ४४० ) ॥ कनकमयान्यङ्गदानि यस्य स कनकाङ्गदी । रहस्योपनिषद्विद्यावोध्यत्वाद्गुहायां हृदयाकाशे निहित इति गुह्यः । ज्ञानैश्वर्यबलादिभिर्गम्भीरो गभीरः । दुष्प्रवेशत्वाद्गहनः, अवस्थात्रयभावाभावसाक्षित्वाद्गहनो वा । वाङ्मनसागोचरत्वाद्गुप्तः । 'एषु सर्वेषु भूतेषु गूढात्मा न प्रकाशते' इति श्रुतेः । 'मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदाम् । धारयँल्लोकरक्षार्थमुक्तश्चक्रगदाधरः' इति ॥ ७१ ॥ विदधाति सृजतीति विधाता वेधाः । पृषोदरादित्वात्साधुत्वम् ।

**महावराहो गोविन्दः सुषेणः कनकाङ्गदी ॥ गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ७१ ॥**
**वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ॥ वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः॥७२॥**

स्वयमेव कार्यस्य कारणेऽङ्गं सहकार्यस्येति स्वाङ्गः । न केनाप्यवतारेषु जित इत्यजितः । कृष्णद्वैपायनः कृष्णः । 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्' इति विष्णुपुराणवचनात् ॥ ( ५५० ) ॥ स्वरूपसामर्थ्यादेः प्रच्युत्यभावाद्दृढः । संहारसमये युगपत्प्रजाः सङ्कर्षतीति सङ्कर्षणः । न च्योतति स्वपदादित्यच्युतः । संङ्कर्षणोऽच्युत इति नामैकं सविशेषणम् । वृणोति व्रियते वा'वरुणः' वरुणाशां दिशं सायं गत आदित्यो वरुणः । रश्मिसंवरणात्सायंगतः सूर्यो वरुण 'इमं मे वरुण श्रुधि हवम्' इति मन्त्रवर्णात्' 'वरुणो यादसामहम्' इति भगवद्वचनाच्च । वरुणस्यापत्यं वसिष्ठोऽगस्त्यो

वा वरुणः।वृक्ष इवाचलतया स्थित इति वृक्षः । 'वृक्षवत्स्तब्धो दिवि तिष्ठत्येकः' इति श्रुतेः । व्याप्त्यर्थादक्षतेर्धातोः पुष्करोपपदादणि प्रत्यये सति पुष्कराक्षः, हृदयपुण्डरीके चिन्तितः चित्स्वरूपेण प्रकाशत इति वा पुष्कराक्षः । सृष्टिस्थित्यन्तकर्माणि मनसैव करोतीति महामनाः।'मनसैव जगत्सृष्टिं संहारं च करोति यः' इति विष्णुपुराणे (५६७)॥७२॥'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्य च मोक्षस्य षण्णां भग इतीरणा' सोऽस्यास्तीति भगवान् । 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ' इति विष्णुपुराणे । ऐश्वर्यादिकं संहारसमये हन्तीति भगहा । सुखरूपत्वादानन्दी, सर्वसम्पत्समृद्धत्वादानन्दी वा ॥ ( ५६० ) ॥ भूततन्मात्रनिर्मितां वैजयन्त्याख्यां वनमालां वहन् वनमाली । हलमायुधमस्येति हला-

भगवान् भगहाऽऽनन्दी वनमाली हलायुधः ॥ आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ७३ ॥
सुधन्वाऽखण्डपरशुर्दारुणो द्रविणप्रदः ॥ दिविस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ७४ ॥

युधो बलभद्राकृतिः । अदित्यां कश्यपाद्वामनरूपेण जात इत्यादित्यः । ज्योतिषि सवितृमण्डले स्थितो ज्योतिरादित्यः, ज्योतिश्चासावादित्यश्चेति वा । द्वन्द्वानि शीतोष्णादीनि सहत इति सहिष्णुः । गतिश्चासौ सत्तमश्चेति गतिसत्तमः ॥ ७३ ॥ शोभनमिन्द्रियादिमयं शार्ङ्गं धनुरस्यास्तीति सुधन्वा । शत्रूणां खण्डनात् खण्डः परशुरस्य जामदग्न्याकृतेरिति खण्डपरशुः शिवो वाऽखण्डः । परशुरस्येति वा सन्मार्गविरोधिनां दारुणत्वाद्दारुणः । द्रविणं वाञ्छितं वित्तं भक्तेभ्यः प्रददातीति द्रविणप्रदः ॥ ( ५७० ) ॥ दिवस्पर्शनाद्दिविस्पृक् । सर्वदृशां सर्वज्ञानानां विस्तारकृद्व्यासः सर्वदृग्व्यासः । अथवा सर्वा च सा दृक्चेति सर्वदृक्

सर्वाकारं ज्ञानम् सर्वस्य दृष्टित्वाद्वा सर्वदृक् । ऋग्वेदादिविभागेन चतुर्धा वेदा व्यस्ता आद्यो वेदः एकविंशतिधा कृतः द्वितीय एकोत्तरशतधा कृतः सामवेदः सहस्रधा कृतः अथर्ववेदः नवधा शाखाभेदेन कृतः अन्यानि पुराणानि व्यस्तान्यनेनेति व्यासः ब्रह्मा। वाचस्पतिरयोनिजः, वाचो विद्यायाः पतिर्वाचस्पतिः, जनन्यां न जायत इत्ययोनिजः, वाचस्पतिरयोनिज इति सविशेषणमेकं नाम ॥ ७४ ॥ वेदव्रतसमाख्यातैस्त्रिभिः सामभिः सामगैः स्तुत इति त्रिसामा । साम गायतीति सामगः । वेदानां मध्ये सामवेदः साम । 'वेदानां सामवेदोऽस्मि' इति भगवद्वचनात् । सर्वदुःखोपशमलक्षणं परमानन्दरूपं निर्वाणं वेदः । संसाररोगस्यौषधं भेषजं यद्वा बिभेत्यस्मादिति भेषजम् । संसाररोगानिर्मोक्षकारिणीं परां विद्यामुपदिशतीति

**त्रिसामा सामगः साम निर्वाणं भेषजं भिषक्॥संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम्॥७६॥**

भिषक् । 'भिषक्तमं त्वा भिषजां शृणोमि' इति श्रुतेः । मोक्षार्थं चतुर्थमाश्रमं कृतवानिति संन्यासकृत् ॥ (५८०) ॥ संन्यासिनां प्राधान्येन ज्ञानसाधनं शममाचष्ट इति शमः । 'यतीनां प्रशमो धर्मो नियमो वनवासिनाम् । दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम्' इति स्मृतेः । 'तत्करोति तदाचष्टे' इति णिचि पचाद्यचि कृते रूपं शमः । सर्वभूतानां शमयितेति वा शमः । विषयसुखेष्वसङ्गतया शान्तः । 'निष्कलं निष्क्रियं शान्तम्' इति श्रुतेः । प्रलये नितरां तत्रैव तिष्ठन्ति भूतानीति निष्ठा । समस्ताविद्यानिवृत्तिः शान्तिः सा ब्रह्मैव । परमुत्कृष्टमयनं स्थानं पुनरावृत्ति-

शङ्काररहितमिति परायणम् । पुँल्लिङ्गपक्षे बहुव्रीहिः ॥ ७९ ॥ सुन्दरां तनुं धारयन् शुभाङ्गः । रागद्वेषादिनिर्मोक्षलक्षणां शान्तिं ददातीति शान्तिदः । सर्गादौ सर्वभूतानि ससर्जेति स्रष्टा । कौ भूम्यां मोदत इति कुमुदः । कोः पृथिव्याः वलनात् संवरणात् कुवलं जलम्, तस्मिन् शेषोदरे शेत इति कुवलेशयः । 'शयवासवासिष्वकालात्' इत्यलुक् सप्तम्याः । कुवलस्य बदरीफलस्य मध्ये शेते तक्षकः सोऽपि तस्य विभूतिरिति वा हरिः कुवलेशयः । कौ भूम्यां संशेरत इति सर्पाणामुदरं कुवलम्, तस्मिन् शेषोदरे शेत इति वा कुवलेशयः ( ५९० ) ॥ गवां वृद्ध्यर्थं गोवर्धनं धृतवानिति गोभ्यो हितो गोहितः, गोर्भूमेर्भारावतरणे स्वेच्छया शरीरग्रहणं कुर्वन् वा गोहितः । गोर्भूम्यादेः

**शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ॥ गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ७६ ॥**
**अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ॥ श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतांवरः॥७७॥**

पतिः गोपतिः । रक्षको जगत इति गोप्ता, स्वमायया स्वमात्मानं संवृणोतीति वा गोप्ता । सर्वकामाभिवर्षके अक्षिणी यस्येति वृषभाक्षः । वृषो धर्मः स एवं वा दृष्टिरस्येति वृषभाक्षः । वृषो धर्मः प्रियो यस्य स वृषप्रियः । 'वा प्रियस्य' इति पूर्वनिपातविकल्पविधानात् परनिपातः ॥ ७६ ॥ देवासुरसङ्ग्रामान्न निवर्तत इत्यनिवर्ती । वृषप्रियत्वाद्धर्मान्न निवर्तत इति वा अनिवर्ती । स्वभावतो विषयेभ्यो निवृत्त आत्मा मनोऽस्येति निवृत्तात्मा । विस्तृतं जगत् संहारसमये सूक्ष्मरूपेण संक्षिपन् संक्षेप्ता । उपात्तस्य परिरक्षणं क्षेमं करोतीति

क्षेमकृत् । नामस्मृतिमात्रेण पावयन् शिवः । इति नाम्नां षष्ठं शतं विवृतम् ॥ (६०० ) ॥ श्रीवत्ससंज्ञं चिह्नमस्य वक्षसि स्थितमिति श्रीवत्सवक्षाः । अस्य वक्षसि श्रीरनपायिनी वसतीति श्रीवासः । अमृतमथने सर्वान् सुरासुरादीन् विहाय श्रीरेनं वरयामासेति श्रीपतिः, श्रीः परा शक्तिः तस्याः पतिरिति वा । 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतेः । ऋग्यजुःसामलक्षणा श्रीर्येषां तेषां श्रीमतां विरिञ्च्यादीनां प्रधान इति श्रीमतांवरः । 'ऋचः सामानि यजूंषि । सा हि श्रीरमृता सताम्' इति श्रुतेः ॥ ७७ ॥ श्रियं ददाति भक्तानामिति श्रीदः । श्रिय ईशः श्रीशः । श्रीमत्सु नित्यं वसतीति श्रीनिवासः । श्रीशब्देन श्रीमन्तो लक्ष्यन्ते । सर्वशक्तिमयेऽस्मिन्नखिलाः

**श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ॥ श्रीधरः श्रीकरःश्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥७८॥**
**स्वक्षः स्वङ्गः शतानन्दो नन्दी ज्योतिर्गणेश्वरः ॥ विजितात्माऽविधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥७९॥**

श्रियो निधीयन्ते इति श्रीनिधिः । कर्मानुरूपेण विविधाः श्रियः सर्वभूतानां भावयतीति श्रीविभावनः । सर्वभूतानां जननीं श्रियं वक्षसि वहन् श्रीधरः ॥ (६१० ) ॥ स्मरतां स्तुवतामर्चयतां च भक्तानां श्रियं करोतीति श्रीकरः । अनपायिसुखावाप्तिलक्षणं श्रेयः, तच्च परस्यैवं रूपमिति श्रेयः । श्रियोऽस्य सन्तीति श्रीमान् । त्रयाणां लोकानामाश्रयत्वाल्लोकत्रयाश्रयः ॥ ७८ ॥ शोभने पुण्डरीकाभे अक्षिणी अस्येति स्वक्षः । शोभनान्यङ्गानि अस्येति स्वङ्गः । एक एव परमानन्द उपाधिभेदाच्छतधा भिद्यत इति शतानन्दः । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । परमानन्दविग्रहो नन्दी । ज्योतिर्गणानामीश्वरो ज्योतिर्गणेश्वरः । 'तमेव भान्तमनुभाति

सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः, 'यदादित्यगतं तेजः' इत्यादिस्मृतेश्च । विजित आत्मा मनो येन स विजितात्मा ॥ (६२० ) ॥ न केनापि विधेय आत्मा स्वरूपमस्येति अविधेयात्मा । सती अवितथा कीर्तिरस्येति सत्कीर्तिः । करतलामलकवत्सर्वं साक्षात्कृतवतः क्वापि संशयो नास्तीति छिन्नसंशयः ॥ ७९ ॥ सर्वभूतेभ्यः समुद्रिक्तत्वादुदीर्णः । सर्वतः सर्वं स्वचैतन्येन पश्यतीति सर्वतश्चक्षुः । 'विश्वतश्चक्षुः' इति श्रुतेः । न विद्यतेऽस्येशः इत्यनीशः । 'न तस्येशः कश्चन' इति श्रुतेः । शश्वद्भवन्नपि न विक्रियां कदाचिदुपैतीति शाश्वतस्थिर इति नामैकम् । लङ्कां प्रति मार्गमन्वेषमाणः सागरं प्रति भूमौ शेते इति भूशयः । स्वेच्छयाऽवता-

**उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ॥ भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ८० ॥**

**आर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ॥ अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ८१ ॥**

रैर्बहुभिर्भूमिं भूषयन् भूषणः । भूतिर्भवनं सत्ता विभूतिर्वा, सर्वविभूतीनां कारणत्वाद्वा भूतिः ॥ (६३० ) ॥ विगतः शोकोऽस्य परमानन्दैकरूपत्वादिति विशोकः । स्मृतिमात्रेण भक्तानां शोकं नाशयतीति शोकनाशनः ॥ ८० ॥ अर्चिष्मन्तो यदीयेनार्चिषा चन्द्रसूर्यादयः स एव मुख्योऽर्चिष्मान् । सर्वलोकादिभिर्विरिञ्च्यादिभिरर्चित इत्यर्चितः । कुम्भवदस्मिन्सर्वं प्रतिष्ठितमिति कुम्भः । गुणत्रयातीततया विशुद्ध आत्माऽस्येति विशुद्धात्मा । स्मृतिमात्रेण पापानां क्षपणात् विशोधनः । चतुर्व्यूहेषु वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धेषु ग्रहणात् न निरु-

द्धयते शत्रुभिः कदाचिदिति वाऽनिरुद्धः । प्रतिपक्षोऽस्य न विद्यत इत्यप्रतिरथः । प्रकृष्टं द्युम्नं द्रविणमस्येति प्रद्युम्नः चतुर्व्यूहात्मा ॥ (६४०)॥ अमितो विक्रमोऽस्येत्यमितविक्रमः ॥ ८१ ॥ कालनेमि नमसुरं निजघानेति कालनेमिनिहा । गणं विना शत्रूणां कुलानि निहत्य राजत इति वीरः, विक्रमशालित्वाद्वा वीरः 'शूर वीर विक्रान्तौ' इति धातुपाठात् । शूरकुलोद्भवत्वाच्छौरिः । शूरजनानां वासवादीनां शौर्यातिशयेनेष्ट इति शूरजनेश्वरः । त्रयाणां लोकानामन्तर्यामितयाऽऽत्मेति त्रिलोकात्मा, त्रयो लोका अस्मात्परमार्थतो न भिद्यन्ते इति वा त्रिलोकात्मा । त्रयो लोकास्तदाज्ञप्ताः स्वेषु स्वेषु कर्मसु वर्तन्त इति त्रिलोकेशः । केशसंज्ञिताः सूर्यादिसंक्रान्ता अंशवस्तद्वत्तया केशवः । 'अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः । सर्वज्ञाः

**कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः ॥ त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥८२॥**
**कामदेवः कामपालः कामी कान्तः कृतागमः ॥ अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥८३॥**

केशवं तस्मान्मामाहुर्द्विजसत्तमाः ' इति महाभारते । ब्रह्मविष्णुशिवाख्याः शक्तयः केशसंज्ञिताः तद्वत्तया वा केशवः । ' त्रयः केशिनः ' इति श्रुतेः । ' मत्केशो वसुधातले ' इति केशशब्दः शक्तिपर्यायत्वेन प्रयुक्तः । ' को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् । आवां तवांशसम्भूतौ तस्मात्केशवनामवान् ' इति हरिवंशे । केशिनामानमसुरं हतवानिति केशिहा । सहेतुकं संसारं हरतीति हरिः ॥ (६५०) ॥ ८२ ॥ धर्मादिपुरुषार्थचतुष्टयं वाञ्छद्भिः काम्य इति कामः, स चासौ देवश्चेति कामदेवः । कामिनां कामान् पालयतीति कामपालः । पूर्णकामत्वात्कामी, कामोऽस्यास्तीति वा 'सोऽकामयत ' इति

श्रुतेः । अभिरूपतमं देहं वहन् कान्तः । द्विपरार्धान्ते कस्य हिरण्यगर्भस्य ब्रह्मणोऽन्तो यस्मादिति वा कान्तः, । कृत आगमः श्रुतिस्मृत्यादिलक्षणो येन स कृतागमः । ' वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ' इति वक्ष्यति, ' श्रुतिस्मृती ममैवाज्ञे ' इति भगवद्वचनात् । इदं तदीदृगेवेति निर्देष्टुं यत्र न शक्यते गुणाद्यतीतत्वात्तादृग्वपू रूपमस्येत्यनिर्देश्यवपुः । रोदसी व्याप्य कान्तिरभ्यधिका स्थिताऽस्येति विष्णुः । ' व्याप्य मे रोदसी पार्थ कान्तिरभ्यधिका स्थिता । क्रमणाद्वाऽप्यहं पार्थ विष्णुरित्यभिसंज्ञितः ' इति महाभारते । गत्यादिमत्त्वाद्वीरः । ' वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु ' इति धातुपाठात् । व्यापित्वान्नित्यत्वात्सर्वात्मत्वाद्देशतः कालतो वस्तुतश्चापरिच्छिन्नत्वादनन्तः । 'सत्यं

**ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ॥ ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः॥ ८४ ॥**

ज्ञानमनन्तं ब्रह्म ' इति श्रुतेः, ' गन्धर्वाप्सरसः सिद्धाः किन्नरोरगचारणाः । नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमव्ययः ' इति विष्णुपुराणवचनाच्चानन्तः । यद्दिग्विजये प्रभूतं धनमजयत्तेन धनञ्जयोऽर्जुनः । ' पाण्डवानां धनञ्जयः ' इति भगवद्वचनात् ॥ ( ६६० ) ॥ ८३ ॥ ' तपो वेदाश्च जातिश्च ज्ञानं च ब्रह्मसंज्ञितम् ' तेभ्यो हितत्वात्तद्वेदितृत्वाद्वा ब्रह्मण्यः । तपआदीनां कर्तृत्वाद्ब्रह्मकृत् । ब्रह्मात्मना सर्वं सृजतीति ब्रह्मा । बृहत्त्वाद्बृंहणत्वात्सत्यादिलक्षणं ब्रह्म । ' सत्यं ज्ञानमनन्तं ब्रह्म ' इति श्रुतेः । 'प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरः । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ' इति विष्णुपुराणे । तपआदीनां विवर्धनात् ब्रह्मविवर्धनः । वेदं वेदार्थं च यथावद्वेत्ति विन्दत इति वा ब्रह्मवित् । ब्रह्मात्मना

ब्राह्मणात्मना समस्तानां लोकानां प्रवचनं कुर्वन्वेदस्यायमिति ब्राह्मणः। ब्रह्मसंज्ञितास्तच्छेषभूता अस्य सन्तीति ब्रह्मी। वेदान् स्वात्मभूतान् जानातीति ब्रह्मज्ञः। ब्राह्मणानां प्रियो ब्राह्मणप्रियः, ब्राह्मणाः प्रिया अस्येति वा। 'घ्नन्तं शपन्तं परुषं वदन्तं यो ब्राह्मणं न प्रणमेद्यथाऽहम् (भृगुमिव)। स पापकृद्ब्रह्मदवाग्निदग्धो वध्यश्च दण्ड्यश्च न चास्मदीयः' इति भगवद्वचनात्। 'यं देवं देवकी देवी वसुदेवादजीजनत्। भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः' इति च महाभारते (६७०)॥ ८४॥ महान्तः क्रमाः पादविक्षेपा अस्येति महाक्रमः। 'शं नो विष्णुरुरुक्रमः' इति श्रुतेः। महज्जगदुत्पत्त्यादि कर्मास्येति महाकर्मा। यदीयेन तेजसा भास्करादयस्तेजस्विनस्तन्महत्तेजोऽस्येति महातेजाः।

**महाक्रमो महाकर्मा महातेजा महोरगः॥ महाक्रतुर्महायज्वा महायज्ञो महाहविः॥ ८५॥**

**स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः॥ पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः॥८६॥**

'येन सूर्यस्तपति तेजसेद्धः' इति श्रुतेः, 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति स्मृतेश्च। क्रौर्यशौर्यादिभिर्महद्भिः समलंकृत इति वा महातेजाः। महांश्चासावुरगश्चेति महोरगः। 'सर्पाणामस्मि वासुकिः' इति भगवद्वचनात्। महांश्चासौ क्रतुश्चेति महाक्रतुः। 'यथाऽश्वमेधः क्रतुराट्' इति मनुवचनात्। 'सोऽपि स एव' इति श्रुतेः। महांश्चासौ यज्वा चेति लोकसंग्रहार्थं यज्ञान् निर्वर्तयन् महायज्वा। महांश्चासौ यज्ञश्चेति महायज्ञः। 'यज्ञानां जपयज्ञोऽस्मि' इति भगवद्वचनात्। महच्च तद्धविश्चेति ब्रह्मात्मनि सर्वं जगत्तदात्मतया हूयत इति महाहविः। महाक्रतुरित्यादयो बहुव्रीहयो वा॥ ८५॥ सर्वैः स्तूयते

न स्तोता कस्यचिदिति स्तव्यः । अत एव स्तवप्रियः ॥ ( ६८० ) ॥ येन स्तूयते तत्स्तोत्रं गुणसंकीर्तनात्मकम् । स्तुतिः स्तवनक्रिया । स्तोताऽपि स एव । प्रियो रणो यस्य, यतः पञ्च महायुधानि नन्दकखड्गसहितानि धत्ते सततं लोकरक्षणार्थमतो रणप्रियः । सर्वैः कामैः सकलाभिः शक्तिभिश्च सम्पन्न इति पूर्णः । न केवलं पूर्ण एव पूरयिता च सर्वेषां सम्पद्भिः । स्मृतिमात्रेण कल्मषाणि क्षपयतीति पुण्यः । पुण्या कीर्तिरस्य, यतः पुण्यमावहत्यस्य कीर्तिर्नृणामिति पुण्यकीर्तिः । आन्तरैर्बाह्यैर्व्याधिभिः कर्मजैर्न पीड्यत इति अनामयः ॥ ८६ ॥ मनसो वेग इव वेगोऽस्य सर्वगतत्वान्मनोजवः ॥ ( ६९० ) ॥ चतुर्दशविद्यानां बाह्यविद्यासमयानां च प्रणेता

**मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ॥ वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ८७ ॥**

प्रवक्ता चेति तीर्थकरः । हयग्रीवरूपेण मधुकैटभौ हत्वा विरिञ्चये सर्गादौ सर्वाः श्रुतीरन्याश्च विद्या उपदिशन् वेदबाह्या विद्याः सुरवैरिणां बन्धनादि चोपदिशति इति पौराणिकाः कथयन्ति । वसु सुवर्णं रेतोऽस्येति वसुरेताः । 'अप एव ससर्जादौ तासु वीर्यमथासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्' इति वचनात् ब्रह्मणः कारणं परमिति वसुरेताः । वसु धनं प्रकर्षेण ददाति साक्षाद्धनाध्यक्षोऽयमितरस्तु तत्प्रसादाद्धनाध्यक्ष इति वसुप्रदः । वसु प्रकृष्टं मोक्षाख्यं फलं भक्तेभ्यः प्रददातीति द्वितीयो वसुप्रदः । 'विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणं तिष्ठमानस्य तद्विदः' इति श्रुतेः । सुरारीणां वसूनि प्रकर्षेणाधः खण्डयन् वा वसुप्रदः ।

वसुदेवस्यापत्यं वासुदेवः । वसन्ति भूतानि तत्र तेषु वा वसतीति वसुः । छादयत्यात्मनः स्वरूपं माययेति वा वसुः । अविशेषेण सर्वविषयेषु तन्मनो वसतीति वसुः, तन्मनोऽस्येति वसुमनाः ब्रह्म । 'हविरिति तद्धविरेव' इति भगवद्वचनाद्धविः ॥ ८७ ॥ 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुतेः ब्रह्मास्तीति ये विदुस्ते सन्तस्तैः प्राप्यत इति सद्गतिः । सती गतिर्बुद्धिः समुत्कृष्टाऽस्येति वा सद्गतिः । सती कृतिर्जगदुत्पत्त्यादिलक्षणाऽस्य यस्मात्तेन सत्कृतिः ॥ (७००) ॥ इति सप्तमं शतं विवृतम् ॥ सजातीयविजातीयस्वगतभेदरहितानुभूतिः सत्ता । 'एकमेवाद्वितीयम्' इति श्रुतेः । स एव परमात्मा चिदात्मको बोधो बहुधा भासमानत्वात्सद्भूतिः, नानात्वप्रतीतेर्बाध्यमा-

**सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ॥ शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ८८ ॥**

**भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ॥ दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ८९ ॥**

नत्वान्न सन्नाप्यसन् । श्रौतो वा यौक्तिको वा बाधः प्रपञ्चस्य विवक्षितः । सतां तत्त्वविदां परं प्रकृष्टमयनमिति सत्परायणः । हनुमन्मुखाः सैनिकाः शौर्यशालिनो यस्यां सेनायां सा शूरसेना यस्य स शूरसेनः । यदूनां प्रधानत्वाद्यदुश्रेष्ठः । सतां विदुषामाश्रय इति सन्निवासः । शोभना यामुना यमुनासंबन्धिनः परिवेष्टारोऽस्येति सुयामुनः । गोपालवेषधरा यमुनापरिवेष्टारः पद्मासनादयः शोभना अस्येति वा सुयामुनः ॥ ८८ ॥ भूतान्यत्राभिमुख्येन वसन्तीति भूतावासः । 'वसन्ति त्वयि भूतानि भूतावासस्ततो भवान्'इति हरिवंशे । जगदाच्छादयति माययेति वासुः,स एव देव इति वासुदेवः। 'छादयामि जगत्सर्वं

भूत्या सूर्य इवांशुभिः' इति भगवद्वचनात् । सर्वे एवासवः प्राणा जीवात्मके यस्मिन्नाश्रये निलीयन्ते स सर्वासुनिलयः ॥ ॥ ( ७१० ) ॥ अलं पर्याप्तिः शक्तिसम्पदां नास्य विद्यत इत्यनलः । धर्मविरुद्धे पथि तिष्ठतां दर्पं हन्तीति दर्पहा । धर्मवर्त्मनि वर्तमानानां दर्पं गर्वं ददातीति दर्पदः । स्वात्मामृतरसास्वादनात् नित्यं प्रमुदितो दृप्तः । न शक्या धारणा यस्य प्रणिधानादिषु सर्वोपाधिविनिर्मुक्तत्वात्तथाऽपि तत्प्रसादतः कैश्चिद् दुःखेन धार्यते हृदये जन्मान्तरसहस्रेषु भावनायोगात्तस्माद् दुर्धरः । 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तवर्त्मनाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ' इति भगवद्वचनात् । नान्तरै रागादिभिर्बाह्यैः शत्रुभिः पराजित इत्यपराजितः ॥ ८९ ॥ विश्वा मूर्तिरस्य सर्वात्मकत्वादिति विश्वमूर्तिः । शेषपर्यङ्कशायिनोऽस्य

विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ॥ अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ९० ॥
एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ॥ लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ९१ ॥

महती मूर्तिरिति महामूर्तिः । ज्ञानमयी मूर्तिः स्वेच्छया तैजसी वा दीप्तिरस्येति दीप्तमूर्तिः । कर्मनिबन्धना मूर्तिरस्य न विद्यत इति अमूर्तिमान् ॥ ( ७२० ) ॥ अवतारेषु स्वेच्छया लोकानामुपकारिणीः बह्वीर्मूर्तीर्भजत इत्यनेकमूर्तिः । यद्यप्यनेकमूर्तित्वं तथाऽप्ययमीदृश इति न व्यज्यत इति अव्यक्तः । नानाविकल्पजा मूर्तयः संविदाकृतेः सन्तीति शतमूर्तिः । यतो विश्वादिमूर्तित्वमत एव शताननः ॥ ९० ॥ परमार्थतः सजातीयविजातीयस्वगतभेदविमुक्तत्वादेकः । 'एकमेवाद्वितीयम् ' इति श्रुतेः । मायया बहुरूपत्वान्नैकः । 'इन्द्रो मायाभिः पुरुरूप ईयते ' इति श्रुतेः । सोमो यत्राभिषूयते सोऽध्वरः सवः । कशब्दः सुख-

वाचकः, तेन स्तूयत इति कः । ‘ कं ब्रह्म ’ इति श्रुतेः । सर्वपुरुषार्थरूपत्वाद्ब्रह्मैव विचार्यमिति ब्रह्म किम् । यच्छब्देन स्वतःसिद्धवस्तूद्देशवाचिना ब्रह्म निर्दिश्यते इति ब्रह्म यत् । ‘ यतो वा इमानि भूतानि जायन्ते ’ इति श्रुतेः ॥ ( ७३० ) तनोतीति ब्रह्म तत् । ‘ ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ’ इति भगवद्वचनात् । पद्यते गम्यते मुमुक्षुभिरिति पदम् । यस्मादुत्कृष्टं नास्ति तदनुत्तमम् । सविशेषणमेकं नाम पदमनुत्तम-मिति । आधारभूतेऽस्मिन्त्सकला लोका बध्यन्त इति लोकानां बन्धुर्लोकबन्धुः । लोकानां जनकत्वाज्जन-कोपमो बन्धुर्नास्तीति वा, लोकानां बन्धुकृत्यं हिताहितोपदेशं श्रुतिस्मृतिलक्षणं कृतवानिति वा लोकबन्धुः ।

**सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ॥ वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ९२ ॥**

लोकैर्नाथ्यते याच्यते तानुपतपति तेभ्य आशास्ते तेषामीष्ट इति वा लोकनाथः । ‘ नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु’ इति धातुपाठात् । मधुकुले जातत्वान्माधवः । भक्तस्नेहवान् भक्तवत्सलः ॥ ९१ ॥ सुवर्णस्य वर्ण इव वर्णोऽस्येति सुवर्णवर्णः ‘यदापश्यः पश्यते रुक्मवर्णम्’ इति श्रुतेः । हेमेवाङ्गं वपुरस्येति हेमाङ्गः ‘य एषोऽन्तराऽऽदित्ये हिरण्मयः पुरुषः’ इति श्रुतेः । वराणि शोभनान्यङ्गान्यस्येति वराङ्गः । चन्दनाह्लादनैरङ्गदैः केयूरैर्भूषित इति चन्दनाङ्गदी ॥ ( ७४० ) ॥ धर्मत्राणाय वीरानसुरमुख्यान् हिरण्यकशिपुप्रभृ-तीन् रागादींश्च हन्तीति वीरहा । समो नास्य विद्यते सर्वविलक्षणत्वादिति विषमः । ‘ न त्वत्समोऽस्त्य-

भ्याधिकः कुतोऽन्यः’ इति भगवद्वचनात् । सर्वविशेषरहितत्वाच्छून्यवच्छून्यः। धृताः विगलिता आशिषः प्रार्थना अस्येति धृताशीः । न स्वरूपान्न सामर्थ्यान्नावज्ञानादिकाद्गुणात् चलनं विद्यतेऽस्येत्यचलः । वायुरूपेण चलतीति चलः ॥ ९२ ॥ अनात्मवस्तुष्वात्माभिमानो नास्ति स्वसंवेदनाकृतेरित्यमानी । स्वमायया सर्वेषामनात्मनि स्वात्माभिमानं ददाति, भक्तानां सत्कारं मानं च ददाति, अधर्मिष्ठानां सत्कारं द्यति खण्डयति, तत्त्वविदामनात्मन्यभिमानं द्यति खण्डयतीति वा मानदः । सर्वैर्माननीयः पूजनीयः सर्वेश्वरत्वादिति मान्यः । चतुर्दशानां लोकानामीश्वरत्वाल्लोकस्वामी ॥ ( ७९० ) ॥ त्रिलोकान् धारयतीति त्रिलोकधृक् । शोभना मेधा

**अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ॥ सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥९३॥**
**तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ॥ प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ९४ ॥**

प्रज्ञाऽस्येति सुमेधाः । ‘नित्यमसिच् प्रजामेधयोः’ इति समासान्तोऽसिच् प्रत्ययः। मेधेऽध्वरे जायत इति मेधजः । कृतार्थो धन्यः । सत्या अवितथा मेधाऽस्येति सत्यमेधाः । अंशैरशेषैः शेषाद्यैरशेषां धरां धारयन् धरा-धरः ॥ ९३ ॥ तेजसा भासा सर्वदा द्वादशादित्यरूपेण वर्षणात्तेजोवृषः । द्युतिमङ्गगतां कान्तिं धारयन् द्युतिधरः । सर्वशस्त्रभृतां श्रेष्ठः इति सर्वशस्त्रभृतां वरः । भक्तैरुपहृतं पत्रपुष्पादिकं गृह्णातीति प्रग्रहः । धावतो विषयारण्ये दुर्दान्तेन्द्रियवाजिनः तत्प्रसादेन रश्मिनेव बध्नातीति वा प्रग्रहवत्प्रग्रहः । ‘प्रग्रहो रश्मौ

वा' इति पाणिनिवचनात् प्रग्रहशब्दस्य साधुत्वम् ॥ ( ७६० ) ॥ स्ववशेन सर्वं निगृह्णातीति निग्रहः । विगत-मग्रमन्तो नाशोऽस्येति व्यग्रः । भक्तजनानामभीष्टप्रदानेषु व्यग्र इति वा व्यग्रः । चतुःशृङ्गो नैकशृङ्गः 'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्या २ आविवेश' इति श्रुतेः । निगदेन मन्त्रेणाग्रे जायते इति निशब्दलोपं कृत्वा गदाग्रजः । यद्वा गदो नाम श्रीवासुदेवावरजः, तस्मादग्रे जायत इति गदाग्रजः ॥ ९४ ॥ चतस्रो मूर्तयो विराट्सूत्रात्मप्राकृततुरीयात्मानोऽस्येति चतुर्मूर्तिः । सिता रक्ता पीता कृष्णा इति चतस्रो मूर्तयोऽस्येति वा चतुर्मूर्तिः । चत्वारो बाहवोऽस्येति चतुर्बाहुरिति नाम वासुदेवे रूढम् । 'शरीरपुरुषः छन्दः

चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ॥ चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ९५ ॥
समावर्तो(ऽ)निवृत्तात्मा दुर्जयो दुरतिक्रमः ॥ दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ९६ ॥

पुरुषः वेदपुरुषो महापुरुषः' इति बह्वृचोपनिषदुक्ताश्चत्वारः पुरुषा व्यूहा अस्येति चतुर्व्यूहः । चतुर्णामाश्रमाणां वर्णानां च यथोक्तकारिणां गतिश्चतुर्गतिः । रागद्वेषादिरहितत्वाच्चतुरं मन आत्माऽस्येति, मनोबुद्ध्यहङ्कारचित्ताख्यपुरुषार्थचतुष्टयात्मकत्वाद्वा चतुरात्मा । धर्मार्थकाममोक्षाख्यचतुष्टयं भवत्युत्पद्यते यस्मादिति चतुर्भावः ॥ ( ७७० ) ॥ यथावद्वेत्ति चतुर्णां वेदानाम् अर्थानिति चतुर्वेदवित् । एकः पादोऽस्येति एकपात् । 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः, 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति स्मृतेश्च ॥ ९५ ॥ संसारचक्रस्य सम्यगावर्तक इति समावर्तः । सर्वत्र

वर्तमानत्वान्न निवृत्त आत्मा कुतोऽपीत्यनिवृत्तात्मा। निवृत्त आत्मा मनो विषयेभ्योऽस्येति वा निवृत्तात्मा। जेतुं न शक्यत इति दुर्जयः। भयहेतुत्वादस्याज्ञां सूर्यादयो नातिक्रामन्तीति दुरतिक्रमः 'भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' इति मन्त्रवर्णात्। 'महद्भयं वज्रमुद्यतम्' इति च। दुर्लभया भक्त्या लभ्यत्वाद् दुर्लभः। 'जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति व्यासवचनात्, 'भक्त्या लभ्यस्त्वनन्यया' इति भगवद्वचनाच्च। दुःखेन गम्यते ज्ञायत इति दुर्गमः। अन्तरायप्रतिहतैर्दुःखादवाप्यत इति दुर्गः। दुःखेनावास्यते चित्ते योगिभिः समाधाविति दुरावासः॥ (७८०)॥ दुर्गामिनो दानवादयस्तान् हन्तीति दुरारिहा॥ ९६॥ शोभनैरङ्गैर्ध्येयत्वाच्छुभाङ्गः।

**शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः॥ इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः॥ ९७॥**
**उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः॥ अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी॥ ९८॥**

लोकानां सारं यत्तद् गृह्णातीति लोकसारङ्गः। 'प्रजापतिर्लोकानभ्यतपत्' इति श्रुतेः। लोकसारः प्रणवः, तेन प्रतिपत्तव्य इति वा लोकसारङ्गः, पृषोदरादित्वात्साधुत्वम्। शोभनस्तन्तुर्विस्तीर्णः प्रपञ्चोऽस्येति सुतन्तुः। तमेव तन्तुं वर्धयति छेदयतीति वा तन्तुवर्धनः। इन्द्रस्य कर्मेव कर्मास्येतीन्द्रकर्मा ऐश्वर्यकर्मेत्यर्थः। महान्ति वियदादीनि भूतानि कर्माणि कार्याण्यस्येति महाकर्मा। कृतमेव न कर्तव्यं किञ्चिदपि कर्मास्य विद्यत इति कृतकर्मा, धर्मात्मकं कर्म कृतवानिति वा। कृतः वेदात्मकः आगमोऽनेनेति कृतागमः। 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इति श्रुतेः॥ ९७॥ उत्कृष्टं भवं जन्म स्वेच्छया भजत इत्युद्भवः,

उद्गतमपगतं जन्मास्य सर्वकारणत्वादिति वा उद्भवः ॥ (७९०) ॥ विश्वातिशायिसौभाग्यशालित्वात्सुन्दरः । सुष्ठु उन्दतीति सुन्दः । 'उन्दी क्लेदने' इति धातोः पचाद्यच् । आर्द्रीभावस्य वाचकः, करुणाकर इत्यर्थः, पृषोदरादित्वात्पररूपत्वम् । रत्नशब्देन शोभा लक्ष्यते । रत्नवत्सुन्दरा नाभिरस्येति रत्ननाभः । शोभनं लोचनं नयनं ज्ञानं वाऽस्येति सुलोचनः । ब्रह्मादिभिः पूज्यतमैरर्चनीयत्वादर्कः । वाजमन्नमर्थिनां सनोति ददातीति वाजसनः । प्रलयाम्भसि शृङ्गवान् मत्स्यविशेषरूपः शृङ्गी । मत्वर्थीयोऽतिशायने । अरीन् अतिशयेन जयति जयहेतुर्वा जयन्तः । सर्वविषयज्ञानमस्येति सर्ववित् । आन्तरान् रागादीन् बाह्यान् हिरण्याक्षादींश्च जेतुं शीलमस्येति जयी । 'प्रजोरिनिः' इत्यधिकारे 'जिदृक्षि' इत्यादिपाणिनीयवचनादिनिप्रत्ययः । सर्वविच्चासौ जयी चेति सर्वविज्जयीत्येकं नाम ॥ ९८ ॥

**सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ॥ महाह्रदो महागर्तो महाभूतो महानिधिः ॥ ९९ ॥**

बिन्दवोऽवयवाः सुवर्णसदृशा अस्येति सुवर्णबिन्दुः । 'आप्रनखात्सर्व एव सुवर्णः' इति श्रुतेः । शोभनो वर्णोऽक्षरं बिन्दुश्च यस्मिन्मन्त्रात्मा वा सुवर्णबिन्दुः ॥ (८००) ॥ इति नाम्नामष्टमं शतं विवृतम् ॥ रागद्वेषादिभिः शब्दादिविषयैश्च त्रिदशादिभिश्च न क्षुभ्यत इत्यक्षोभ्यः । सर्वेषां वागीश्वराणां ब्रह्मादीनामपीश्वरः सर्ववागीश्वरेश्वरः । अवगाह्य सदानन्दं विश्रम्य सुखमासते योगिन इति महाह्रद इव महाह्रदः । गर्तवदस्य माया महती दुरत्ययेति महागर्तः । 'मम माया दुरत्यया' इति भगवद्वचनात् । यद्वा गर्तशब्दो रथपर्याय इति नैरुक्तैरुक्तस्तस्मान्महारथो महागर्तः । महारथत्वमस्य प्रसिद्धं भारतादिषु । कालत्रयानवच्छिन्नस्वरूपत्वान्महाभूतः । सर्वभूतानि यस्मिन्निधीयन्ते, महांश्चासा

निधिश्चेति महानिधिः ॥ ९९ ॥ कुं धरणीं भारावतारणं कुर्वन् मोदयतीति कुमुदः । मुदिरत्र णिजर्थः । कुन्दपुष्पतुल्यानि शुद्धानि धर्मानुबन्धीनि फलानि राति ददातीति कुन्दरः, कुन्दपुष्पतुल्यानि शुद्धानि फलानि लात्यादत्त इति वा कुन्दरः, रलयोर्वृत्त्येकत्वस्मरणात् । 'कुं धरां दारयामास हिरण्याक्षजिघांसया । वाराहं रूपमास्थाय' इति वा कुन्दरः । कुन्दोपमसुन्दराङ्गत्वात्स्वच्छस्फटिकवन्निर्मलः कुन्दः, कुं पृथ्वीं काश्यपायादादिति वा कुन्दः । 'सर्वपापविशुद्ध्यर्थं वाजिमेधेन चेष्टवान् । तस्मिन्यज्ञे महादाने दक्षिणां भृगुनन्दनः ॥ मारीचाय ददौ प्रीतः काश्यपाय वसुन्धराम्' इति हरिवंशे । कुं पृथ्वीं द्यति खण्डयतीति वा कुन्दः, कुशब्देन पृथ्वीश्वरा लक्ष्यन्ते 'निःक्षत्रियां यश्च चकार मेदिनीमनेकशो

**कुमुदः कुन्दरः कुन्दः पर्जन्यः पवनोऽनिलः ॥ अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ १०० ॥**

बाहुवनं तथाऽच्छिनत् । यः कार्तवीर्यस्य स भार्गवोत्तमो ममास्तु माङ्गल्यविवर्धनो हरिः' इति विष्णुधर्मे । पर्जन्यवदाध्यात्मिकादितापत्रयं शमयति, सर्वान्कामानभिवर्षतीति वा पर्जन्यः ॥ ( ८१० ) ॥ स्मृतिमात्रेण पुनातीति पवनः । इलति प्रेरणं करोतीति इलः, तद्रहितत्वादनिलः । इलति स्वपिति इत्यत्र इलस्तद्विपरीतः नित्यप्रबुद्धस्वरूपत्वादिति वाऽनिलः । अथवा निलेर्गहनार्थात्कमत्ययान्तरूपम् । न गहनोऽनिल इति वा । स्वात्मानन्दामृतमश्नातीत्यमृताशः । मथितममृतं सुरान् पाययित्वा स्वयं चाश्नातीति वाऽमृताशः, अमृता अनश्वरा अविनश्वरफलत्वादाशा वाञ्छाऽस्येति वा अमृताशः । मृतं मरणं तद्रहितं वपुरस्येत्यमृतवपुः । सर्वं जानातीति सर्वज्ञः । 'यः सर्वज्ञः स

सर्ववित्' इति श्रुतेः । 'सर्वतोऽक्षिशिरोमुखम्' इति भगवद्वचनात्सर्वतोमुखः ॥ १०० ॥ पत्रपुष्पफलादिभिर्भक्तिमात्रसमर्पितैः सुखेन लभ्यत इति सुलभः । 'पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु । भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै कथं न क्रियते प्रयत्नः' इति महाभारते । शोभनं व्रतं नियमो भुङ्क्ते भोजनान्निवर्तत इति वा सुव्रतः । अनन्याधानसिद्धित्वात्सिद्धः । सुरशत्रव एवास्य शत्रवस्तान् जयतीति शत्रुजित् ॥ (८२०) ॥ सुरशत्रूणां तापनः शत्रुतापनः । न्यक् अवाक् रोहति सर्वेषामुपरि वर्तत इति न्यग्रोधः । पृषोदरादित्वाद्धकारस्य धकारादेशः । सर्वाणि भूतानि न्यक्कृत्य निजमायां वृणोति निरुणद्धीति वा न्यग्रोधः । अम्बराद्दुद्गतः कारणत्वेनेत्युदुम्बरः, पृषोदरादित्वादेवो-

सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ॥ न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥ १०१ ॥

सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ॥ अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥ १०२ ॥

कारादेशः । यद्वोदुम्बरमन्नाद्यं तेन तदात्मना विश्वं पोषयन् उदुम्बरः । 'ऊर्ग्वा अन्नाद्यमुदुम्बरम्' इति श्रुतेः । श्वोऽपि न स्थातेत्यश्वत्थः । पृषोदरादित्वादेव सकारस्य तकारादेशः । 'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः' इति श्रुतेः । 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्' इति स्मृतेश्च । चाणूरनामानमान्ध्रं निषूदितवानिति चाणूरान्ध्रनिषूदनः ॥ १०१ ॥ सहस्राणि अनन्तानि अर्चींषि यस्य स सहस्रार्चिः । 'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः' इति गीतावचनात् । सप्त जिह्वाः अस्य सन्तीति सप्तजिह्वः अग्निरूपी । 'काली

कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुचिश्च देवी लेलायमाना इति सप्त जिह्वाः' इति श्रुतेः । सप्त एधांसि दीप्तयोऽस्येति सप्तैधा अग्निः । 'सप्त ते अग्ने समिधः सप्त जिह्वाः ' इति मन्त्रवर्णात् । सप्ताश्वा वाहनान्यस्येति सप्तवाहनः, सप्तनामैकोऽश्वो वाहनमस्येति सप्तवाहनः । ' एको अश्वो वहति सप्तनामा ' इति श्रुतेः । मूर्तिः घनरूपधारणं समर्थं चराचरलक्षणम् ' ताभ्योऽभितप्ताभ्यो मूर्तिरजायत' इति श्रुतेः, तद्रहित इत्यमूर्तिः । अथवा देहसंस्थानलक्षणमूर्छिताङ्गावयवा मूर्तिस्तद्रहित इत्यमूर्तिः ॥ ( ८३० ) ॥ अघं दुःखं पापं च यस्य न विद्यत इत्यनघः । प्रमात्रादिसाक्षित्वेन सर्वप्रमाणागोचरत्वादचिन्त्यः, अयमीदृश इति विश्वप्रपञ्चविलक्षणत्वेन चिन्तयितुमशक्यत्वाद्वाऽचिन्त्यः ।

अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान्॥अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः॥१०३॥

असन्मार्गवर्तिनां भयं करोति, भक्तानां भयं कृन्ततीति वा भयकृत् । वर्णाश्रमाचारवतां भयं नाशयतीति भयनाशनः । ' वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णोराराध्यते पन्था नान्यस्तत्तोषकारकः ' इति पराशरवचनात् । तैराराधितत्वाद्भयं नाशयतीति भयनाशनः ॥ १०२ ॥ सौक्ष्म्यातिशयशालित्वादणुः । 'एषोऽणुरात्मा चेतसा वेदितव्यः ' इति श्रुतेः । बृहत्त्वाद्बृंहणत्वाच्च ब्रह्म बृहत् । 'महतो महीयान् ' इति श्रुतेः । अस्थूलमित्यादिना द्रव्यप्रतिषेधात् कृशः । स्थूल इत्युपचर्यते सर्वात्मत्वात् । सत्त्वरजस्तमसां सृष्टिस्थितिलयकर्मस्वधिष्ठातृत्वाद् गुणभृत् । परमार्थतो गुणाभावात् निर्गुणः । 'केवलो निर्गुणश्च ' इति श्रुतेः ॥ ( ८४० ) ॥ शब्दादिगुणरहितत्वान्निरतिशयसूक्ष्मत्वान्नित्यशुद्धसर्वगतत्वा-

दिप्रतिबन्धकं कर्मजातं तर्कतोऽपि वक्तुं न शक्यमत एव महान् 'अशब्दास्पर्शश्च महान् शुचिः' इत्यापस्तम्बस्मरणात्। पृथिव्यादीनां धारकाणामपि धारकत्वान्न केनचिद् ध्रियत इति अधृतः। यद्येवमयं केन धार्यत इत्याशङ्क्याह—स्वेनैव आत्मना धार्यत इति स्वधृतः। 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' इति श्रुतेः। पद्मोदरदलताम्रमभिरूपतममस्यास्यमिति स्वास्यः। वेदार्थको महान् शब्दराशिः तस्य मुखान्निर्गतः पुरुषार्थोपदेशार्थमिति वा स्वास्यः। 'अस्य महतो भूतस्य' इत्यादिश्रुतेः। अन्यस्य वंशिनो वंशः पाश्चात्त्यः, पाश्चात्त्यो मूलपुरुषादर्वाग्वंश इति सूचितः, अस्य वंशः प्रपञ्चः स सर्ववंशात्प्रागेव न पाश्चात्त्य इति प्राग्वंशः। वंशप्रपञ्चं वर्धयन्

**भारभृत् कथितो योगी योगीशः सर्वकामदः॥ आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः॥१०४॥**

वंशवर्धनः ॥ १०३ ॥ अनन्तादिरूपेण भुवो भारं बिभ्रद्भारभृत्। देवादिभिरयमेव परत्वेन कथितः, सर्वैर्वेदैः कथित इति वा कथितः। 'सर्वे वेदा यत्पदमामनन्ति। वेदैश्च सर्वैरहमेव वेद्यः' 'वेदे रामायणे चैव पुराणे भारते तथा। आदौ मध्ये तथा चान्ते विष्णुः सर्वत्र गीयते' इति स्मृत्यादिवचनेभ्यः 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्याद्युक्तं किं तदध्वनो विष्णोर्व्यापनशीलस्य पारं कथितं परमं पदं विष्णुसतत्त्वमित्याकाङ्क्षायामिन्द्रियादिभ्यः सर्वेभ्यः परत्वेन प्रतिपाद्यते 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यारभ्य 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्यन्तेन यः कथितः सः। योगो ज्ञानम्, तेनैव गम्यत्वात् योगी। योगः समाधिः, स हि स्वात्मनि सर्वदा समाधत्ते स्वमात्मानं तेन

वा योगी । अन्ये योगिनो योगान्तरायैर्हन्यन्ते तेन स्वरूपात् प्रमाद्यन्ति, अयं तु तद्रहितत्वात्तेषामीश इति योगीशः ॥ भा०
(८९०) ॥ सर्वान् कामान् सदा ददातीति सर्वकामदः । 'फलमत उपपत्तेः' इति भगवता व्यासेनाभिहितत्वात् । आश्रमवतां सर्वेषां संसारारण्ये भ्रमतां विश्रामस्थानत्वादाश्रमः । अविवेकिनः सर्वान् सन्तापयतीति श्रमणः । क्षामाः क्षीणाः सर्वाः प्रजाः करोतीति क्षामः । 'तत्करोति तदाचष्टे' इति णिचि पचाद्यचि कृते संपन्नः क्षाम इति । शोभनानि पर्णानि छन्दांसि संसारतरुरूपेणास्येति सुपर्णः । 'छन्दांसि यस्य पर्णानि' इति भगवद्वचनात् । वायुर्वहति यद्भीत्या भूतानीति स वायुवाहनः । 'भीषाऽस्माद्वातः पवते' इति श्रुतेः ॥ १०४ ॥ श्रीरामरूपेण धनुर्धारयामासेति धनुर्धरः । स एव

**धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः । अपराजितः सर्वसहो नियन्ताऽनियमोऽयमः ॥ १०५ ॥**

दाशरथिः धनुर्वेदं वेत्तीति धनुर्वेदः । दमनं दमयतां दण्डः । 'दण्डो दमयतामस्मि' इति भगवद्वचनात् । वैवस्वतनरेन्द्रादिरूपेण प्रजा दमयतीति दमयिता ॥ (८६०) ॥ दम्येषु दण्डकार्यफलं तच्च स एवेति दमः । शत्रुभिर्न पराजित इत्यपराजितः । सर्वकर्मसु समर्थ इति सर्वसहः । सर्वान् शत्रून् सहत इति वा सर्वसहः । सर्वान् स्वेषु स्वेषु कृत्येषु व्यवस्थापयतीति नियन्ता । न नियमो नियतिस्तस्य विद्यत इत्यनियमः, सर्वनियन्तुर्नियन्त्रन्तराभावात् । ॥ ३८॥
नास्य विद्यते यमो मृत्युरित्ययमः । अथवा यमनियमौ योगाङ्गौ तद्वत्त्वात्स एव नियमो यमः ॥ १०५ ॥

शौर्यादिकं सत्त्वमस्येति सत्त्ववान् । सत्त्वे गुणे प्राधान्येन स्थित इति सात्त्विकः । सत्सु साधुत्वात्सत्यः । सत्ये यथाभूतार्थकथने धर्मे च चोदनालक्षणे प्रकर्षेण नियत इति सत्यधर्मपरायणः ॥ ( ८७० ) ॥ अभिप्रेयते पुरुषार्थकाङ्क्षिभिराभिमुख्येन प्रलयेऽस्मिन्प्रैति जगदिति वाऽभिप्रायः । प्रियाणि इष्टान्यर्हतीति प्रियार्हः । 'यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे । तत्तद् गुणवते देयं तदेवाक्षयमिच्छता' इति स्मरणात् । स्वागतासनप्रशंसार्घ्यपाद्यस्तुतिनमस्कारादिभिः पूजासाधनैः पूजनीय इत्यर्हः । न केवलं प्रियार्ह एव किन्तु स्तुत्यादिभिर्भजतां प्रियं करोतीति प्रियकृत् । तेषामेव प्रीतिं वर्धयतीति प्रीतिवर्धनः ॥ १०६ ॥ विहायसम् आकाशं गतिराश्रयोऽस्येति विहायसगतिः विष्णुप-

**सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः॥अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः॥१०६॥**
**विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ॥ रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ १०७ ॥**

दमादित्यो वा । स्वयमेव द्योतत इति ज्योतिः । 'नारायणः परं ज्योतिः' इति मन्त्रवर्णात् । शोभना रुचिर्दीप्तिरिच्छा वाऽस्येति सुरुचिः । समस्तदेवतोद्देशेन प्रवृत्तेष्वपि कर्मसु हुतं भुङ्क्ते भुनक्तीति वा हुतभुक् । स सर्वत्र वर्तमानः त्रयाणां लोकानां विभुत्वाद्विभुः ॥ ( ८८० ) ॥ रसानादत्त इति रविरादित्यात्मा । विविधं रोचत इति विरोचनः । सूते श्रियमिति सूर्योऽग्निर्वा । सूतेः सुवतेर्वा सूर्यशब्दो निपात्यते 'राजसूयसूर्य' इति पाणिनिवचनात् । सर्वस्य जगतः प्रसविता सविता । 'रसानां च तथाऽऽदानाद्रविरित्यभिधीयसे । प्रजानां त्वं प्रसवनात् सवितेति निगद्यसे'

वि०स० इति विष्णुधर्मोत्तरे । रविर्लोचनं चक्षुरस्येति रविलोचनः । 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति श्रुतेः ॥ १०७ ॥ भा०
॥३९॥ नित्यत्वात्सर्वगतत्वात् देशकालपरिच्छेदाभावादनन्तः, शेषरूपो वा। हुतं भुनक्तीति हुतभुक् । प्रकृतिं भोग्याम् अचेतनां भुङ्क्त इति भोक्ता । जगत्पालयतीति वा भोक्ता । भक्तानां सुखं मोक्षलक्षणं ददाति, असुखं खण्डयतीति वाऽसुखदः। धर्मगुप्तये असकृज्जायमानत्वाद् नैकजः ॥ (८९०) ॥ अग्रे जायत इत्यग्रजः हिरण्यगर्भः। 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिश्रुतेः । आप्तसर्वकामत्वात्प्राप्तिहेत्वभावान्निर्वेदोऽस्य नास्तीति अनिर्विण्णः । साधून्सत आभिमुख्येन मृष्यते क्षमत इति सदामर्षी । तमनाधारमाधारमधिष्ठाय त्रिलोकास्तिष्ठन्तीति लोकाधिष्ठानं ब्रह्म । 'श्रवणायापि बहुभिर्यो न

अनन्तो हुतभुग्भोक्ता(ऽ)सुखदो नैकजोऽग्रजः ॥ अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥१०८॥
सनात्सनातनतमः कपिलः कपिरव्ययः॥स्वस्तिदःस्वस्तिकृत्स्वस्तिस्वस्तिभुक् स्वस्ति-दक्षिणः१०९॥

लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ' इति श्रुतेः । ' आश्चर्यवत्पश्यति कश्चिदेनम् ' इति भगवद्वचनाच्च स्वरूपशक्तिव्यापारकार्यैः अद्भुतत्वाद्वाऽद्भुतः ॥ १०८ ॥
सनादिति निपातः चिरार्थवचनः, कालश्च परस्यैवेति विकल्पना काऽपि । 'परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज । व्यक्ताव्यक्ते ॥३९॥
तथैवान्ये रूपे कालस्तथा परम् ' इति विष्णुपुराणे । सर्वकारणत्वाद्विरिञ्च्यादीनामपि सनातनानामतिशयेन सनातनत्वात्सनातनतमः । वडवानलस्य कपिलो वर्ण इव तद्रूपी कपिलः । कं जलं रश्मिभिः पिबन् कपिः सूर्यः कपिर्वराहो वा । 'कपिर्वराहः

श्रेष्ठश्च ' इति भगवद्वचनात् । अप्यये प्रलयेऽस्मिन्नपियन्ति जगन्तीत्यप्ययः ॥ ( ९०० ) ॥ इति नाम्नां नवमं शतं विवृतम् ॥ भक्तानां स्वस्ति मङ्गलं ददातीति स्वस्तिदः । तदेव करोतीति स्वस्तिकृत् । मङ्गलं स्वरूपमात्मीयं परमानन्दलक्षणं स्वस्ति । तदेव भुंक्त इति स्वस्तिभुक् । भक्तानां मङ्गलं स्वस्ति भुनक्तीति वा स्वस्तिभुक् । स्वस्तिरूपेण दक्षते वर्धते, स्वस्ति विधातुं समर्थ इति वा स्वस्तिदक्षिणः । अथवा दाक्षिणशब्दः आशुकारिणि वर्तते, शीघ्रं स्वस्ति दातुम् अयमेव समर्थ इति । 'स्मरणादेव कृष्णस्य सिध्यन्ति सर्वसिद्धयः ' इति स्मृतेः, ' स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥ स्मरणादेव कृष्णस्य पापसंघातपञ्जरम् । शतधा भेदमायाति गिरिर्वज्रहतो यथा ' इत्यादिवचनेभ्यश्च ॥ १०९ ॥ कर्म रौद्रं रागश्च

**अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ॥ शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ ११० ॥**

रौद्रः पापं च रौद्रम् एतत्त्रयं रौद्रमस्य नास्ति आवाप्तसर्वकामत्वेन रागद्वेषादेरभावादरौद्रः । शेषरूपभाक्कुण्डली । यद्वा साङ्ख्ययोगात्मके कुण्डले मकराकारे अस्य स्त इति कुण्डली, सहस्रांशुमण्डलोपमकुण्डलधारणाद्वा कुण्डली । समस्तलोकरक्षार्थं मनस्तत्त्वात्मकं सुदर्शनाख्यं चक्रं धत्त इति चक्री । 'चलत्स्वरूपमत्यन्तजवेनान्तरितानिलम् ॥ चक्रस्वरूपं च मनो धत्ते विष्णुः करे स्थितम् ' इति विष्णुपुराणे । विक्रमः पादविक्षेपः शौर्यं वा, द्वयं चाशेषरूपेभ्यो विलक्षणमस्येति विक्रमी । श्रुतिस्मृतिलक्षणमूर्जितं शासनमस्येति ऊर्जितशासनः । ' श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः ' इति भगवद्वचनात् ॥ ( ९१० ) ॥ शब्दप्रवृत्तिहेतूनां जात्यादीनामसम्भ-

त्वात् शब्देन वक्तुमशक्यत्वाच्छब्दातिगः । 'यतो वाचो निवर्तन्त । अप्राप्य मनसा सह ' ' न शब्दगोचरैर्यस्य योगिध्येयं परं पदम् ' इत्यादिश्रुतिस्मृतिभ्यः । सर्वे वेदा तात्पर्येण तमेव वदन्तीति शब्दसहः ' सर्वे वेदा यत्पदमामनन्ति ' ' वेदैश्च सर्वैरहमेव वेद्यः ' इत्यादिश्रुतिस्मृतिभ्यः । तापत्रयाभितप्तानां विश्रमस्थानत्वाच्छिशिरः । संसारिणामात्मा शर्वरीवच्छर्वरी, ज्ञानिनां पुनः संसारः शर्वरी, तामुभयेषां करोतीति शर्वरीकरः । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ' इति भगवद्वचनात् ॥ ११० ॥ क्रौर्यं नाम मनोधर्मः कोपजः आन्तरः सन्तापः साभिनिवेशः, अवाप्तसर्वकामत्वात्कामाभावादेव क्रौर्याभावः, तस्मात्क्रौर्यमस्य नास्तीत्यक्रूरः । कर्मणा मनसा

**अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ॥ विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ १११ ॥**

वाचा वपुषा च शोभनत्वात्पेशलः । प्रवृद्धशक्तिः शीघ्रकारी समर्थ इति दक्षविशेषणत्रयं चैतत् परमेश्वरे अस्मिन्नियतमिति दक्षः । दक्षिणशब्दस्यापि दक्ष एवार्थः, पुनरुक्तिभेदो नास्ति शब्दभेदात् । अथवा दक्षते गच्छति हिनस्तीति वा दक्षिणः । ' दक्ष गतिहिंसनयोः ' इति धातुपाठात् । क्षमावतां योगिनां पृथिव्यादीनां च भारधारकाणां श्रेष्ठ इति क्षमिणां वरः । 'क्षमया पृथिवीसमः' इति वाल्मीकिवचनात् । ब्रह्माण्डमखिलं वहन् पृथिवीव भारेण नार्दित इति पृथिव्या अपि वरो वा क्षमिणां वरः । क्षमिणः शक्ताः अयं तु सर्वशक्तिमत्त्वात्सकलाः क्रियाः कर्तुं क्षम इति क्षमिणां वरः । निरस्तातिशयं ज्ञानं सर्वदा सर्वगोचरमस्यास्ति नेतरेषामिति विद्वत्तमः । वीतं विगतं भयं सांसारिकं संसारलक्षणमस्येति वीतभयः, सर्वेश्वरत्वा-

न्नित्यमुक्तत्वाच्च । पुण्यं पुण्यकरं श्रवणं कीर्तनं चास्येति पुण्यश्रवणकीर्तनः । 'य इदं शृणुयान्नित्यम्' इति श्रवणफलवचनात् ॥ ॥ १११ ॥ संसारसागरादुत्तारयतीत्युत्तारणः । दुष्कृतिं पापसंज्ञितां हन्तीति दुष्कृतिहा । ये पापकारिणस्तान्हन्तीति वा दुष्कृतिहा । स्मरणादि कुर्वतां सर्वेषां पुण्यं करोतीति पुण्यरूपत्वात्पुण्यः । सर्वेषां श्रुतिस्मृतिलक्षणया वाचा पुण्यमाचष्ट इति वा पुण्यः । भाविनोऽर्थस्य सूचकान् दुःस्वप्नान् नाशयति ध्यातः स्तुतः कीर्तितश्चेति दुःस्वप्ननाशनः । विविधाः संसारिणां गतीर्मुक्तिप्रदानेन हन्तीति वीरहा । सत्त्वगुणमधिष्ठाय जगत्त्रयं रक्षयन् रक्षणः, नन्द्यादित्वात्कर्तरि ल्युट् । सन्मार्गवर्तिनः सन्तः तद्रूपेण

**उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ॥ वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥ ११२ ॥**
**अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ॥ चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥११३॥**

विद्याविनयवृद्धये स एव वर्तत इति सन्तः । सर्वाः प्रजाः प्राणरूपेण जीवयन् जीवनः ॥ ( ९३० ) ॥ परितः सर्वतो विश्वं व्याप्य व्यवस्थित इति पर्यवस्थितः ॥ ११२ ॥ अनन्तादिरूपेण, विश्वप्रपञ्चरूपेण वाऽवस्थितश्चेत्यनन्तरूपः । अनन्ता अपरिमिता श्रीः परा शक्तिरस्येति अनन्तश्रीः । 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतेः । मन्युः क्रोधो जितो येन स जितमन्युः । भयं संसारजं पुंसामपघ्नन् भयापहः । न्यायसमवेतश्चतुरश्चतुरस्रः पुंसां कर्मानुरूपं फलं प्रयच्छतीति । आत्मा अर्चिःस्वरूपं चित्तं वा गभीरं परिच्छेत्तुमशक्यमस्येति गभीरात्मा । विविधानि फलानि अधिकारिभ्यो विशेषेण दिशतीति विदिशः । विविधामाज्ञां

सृक्कादीनां कुर्वन् व्यादिशः। समस्तानां कर्मिणां कर्मणां फलानि दिशन्वेदात्मनेति दिशः ॥ ११३ ॥ आदिः कारणमस्य न विद्यत इत्यनादिः, सर्वकारणत्वात्। भूतानामाधारो भूर्भुवः, सर्वभूतानामाश्रयत्वेन प्रसिद्धाया भूम्या भुवोऽपि भूरिति भूर्भुवः। अथवा न केवलमसौ भूः भुवो लक्ष्मीः शोभा चेति भूर्भुवोलक्ष्मीः। अथवा भूर्भूलोकः, भुवो भुवर्लोकः, तयोः लक्ष्मीरात्मविद्या। 'आत्मविद्या च देवि त्वम्' इति श्रीस्तुतौ, भूम्यन्तरिक्षयोः शोभेति वा भूर्भुवोलक्ष्मीः। शोभना विविधा ईरा गतयो यस्य स सुवीरः, शोभनं विविधम् ईरणमस्येति वा सुवीरः। रुचिरे कल्याणे अङ्गदे अस्येति रुचिराङ्गदः। जन्तून् जनयन् जननः, ल्युटो बहुलग्रहणात्कर्तरि ल्युट्। जनस्य जनिमतो जन्म उद्भवस्तस्यादिर्मूलकारणमिति जनजन्मादिः। भय-

अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ॥ जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ ११४ ॥
आधारनिलयो(ऽ)धाता पुष्पहासः प्रजागरः ॥ ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥११५॥

हेतुत्वाद्भीमः। 'भीमादयोऽपादाने' इति पाणिनिवचनात्, 'महद्भयं वज्रमुद्यतम्' इति मन्त्रवर्णात्। असुरादीनां भयहेतुः पराक्रमोऽस्यावतारेष्विति भीमपराक्रमः ॥ ११४ ॥ पृथिव्यादीनां पञ्चभूतानामाधाराणामाधारत्वादाधारनिलयः। स्वात्मना धृतस्यान्यो धाता नास्तीत्यधाता। 'नद्यृतश्च' इति समासान्तविधिरनित्य इति कप्रत्ययाभावः। संहारसमये सर्वप्रजा धारयति धयति पिबतीति वा धाता। 'धेट् पाने' इति धातुः॥ ( ९९० ) ॥ मुकुलात्मना स्थितानां पुष्पाणां हावसत् प्रपञ्चरूपेण विकासोऽस्येति पुष्पहासः। नित्यप्रबुद्धरूपत्वात्प्रकर्षेण जागर्तीति प्रजागरः। सर्वेषामुपरि तिष्ठन्

ऊर्ध्वगः। सतां कर्माणि सत्पथेनाचरत्येष इति सत्पथाचारः। मृतान् परीक्षित्प्रभृतीन् जीवयन् इति प्राणदः। प्रणवो नाम परमात्मनो वाचक ओंकारः, तदभेदोपचारेणायं प्रणवः। पणतिर्व्यवहारार्थस्तं कुर्वन् इति पणः, 'पण व्यवहारे' इति धातुः, 'सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन्यदास्ते' इति श्रुतेः। पुण्यानि कर्माणि फलैः संगृह्याधिकारिभ्यः प्रयच्छन् तल्लक्षणयेति वा पणः ॥ ११५ ॥ प्रमितिः संवित्स्वयंप्रमा प्रमाणम् 'प्रज्ञानं ब्रह्म' इति श्रुतेः 'ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः। तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्' इति विष्णुपुराणे। प्राणा इन्द्रियाणि यत्र जीवे निलीयन्ते, तत्परतन्त्रत्वाद्देहस्य धारकाः प्राणापानादयो वा तस्मिन् प्रविलीयन्ते, प्राणितीति प्राणो जीवः, परे पुंसि निलीयत इति वा, प्राणान्

**प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः ॥ तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ ११६ ॥**

जीवांश्चात्मनि संहरंस्तेषामाश्रय इति वा प्राणनिलयः ॥ ( ९६० ) ॥ पोषयन्नन्नरूपेण प्राणानिति प्राणभृत्। प्राणिनो जीवयन् प्राणाख्यैः पवनैरिति प्राणजीवनः। 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' इति मन्त्रवर्णात्। तथ्यममृतं सत्यं परमार्थसत्तत्त्वमित्येते एकार्थवाचिनः परमार्थसतो ब्रह्मणो वाचकाः शब्दाः इति तत्त्वम्। तत्त्वं स्वरूपं यथावद्वेत्तीति तत्त्ववित्। एकश्चासावात्मा चेत्येकात्मा। 'आत्मा वा इदमेक एवाग्र आसीत्' इति श्रुतेः, 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति गीयते' इति स्मृतेश्च। जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीति षड्भावविकारास्तानतीत्य गच्छतीति जन्ममृत्युजरातिगः। 'न जायते म्रियते वा विपश्चित्' इति मन्त्र-

वर्णात् ॥ ११६ ॥ भूर्भुवःस्वःसमाख्यानि त्रीणि व्याहृतिरूपाणि त्रयीसाराणि बह्वृचा आहुः, तैर्होमादिना जगत्त्रयं तरते प्लवते चेति भूर्भुवःस्वस्तरुः । 'अग्नौ न्यस्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति मनुवचनात् । अथवा भूर्भुवःस्वस्तरुसमाख्यो लोकत्रयसंसारवृक्षो भूर्भुवःस्वस्तरुः, भूर्भुवस्वःसमाख्यं लोकत्रयं वृक्षवद्व्याप्य तिष्ठतीति वा भूर्भुवःस्वस्तरुः । संसारसागरात्तारयंस्तारः, प्रणवो वा । सर्वस्य लोकस्य जनक इति सपिता । पितामहस्य ब्रह्मणोऽपि पितेति प्रपितामहः।यज्ञात्मना यज्ञः॥(९७०)॥यज्ञानां पाता स्वामी वा यज्ञपतिः।'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च'इति भगवद्वचनात् । यजमानात्मना तिष्ठन् यज्वा। यज्ञा अङ्गान्यस्येति यज्ञाङ्गो वराहमूर्तिः। "वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः । अग्निजिह्वो दर्भरोमा

भूर्भुवःस्वस्तरुस्तारः सपिता प्रपितामहः ॥ यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ ११७ ॥
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ॥ यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ ११८ ॥

ब्रह्मशीर्षो महातपाः । अहोरात्रेक्षणो दिव्यो वेदान्तश्रुतिभूषणः । आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् । धर्मसत्यमयः श्रीमान् क्रमविक्रमसत्क्रियः । प्रायश्चित्तनखो घोरः पशुजानुर्महाभुजः । उद्गात्रन्त्रो होमलिङ्गः फलबीजमहौषधिः । वाय्वन्तरात्मा मन्त्रस्फिग् विकृतः सोमशोणितः । वेदीस्कन्धो हविर्गन्धो हव्यकव्यास्थिवेगवान् । प्राग्वंशकायो द्युतिमान् नानादीक्षाभिरर्चितः । दक्षिणाहृदयो योगी महासत्रमयो महान् । उपाकर्मेष्टिरुचकः प्रवर्ग्यावर्तभूषणः । नानाछन्दोगतिपथो गुह्योपनिषदासनः । छायापत्नीसहायो वै मेरुशृङ्ग इवोच्छ्रितः" इति हरिवंशे । फलहेतुभूतान्यज्ञान् वाहयतीति यज्ञवाहनः ॥ ११७ ॥ यज्ञं बिभर्तीति

पाति वा यज्ञभृत् । जगदादौ तदन्ते च यज्ञं करोतीति कृन्तति वा यज्ञकृत् । यज्ञानां तत्समाराध्यात्मनां प्रधानं तत्समवायानां शेषीति यज्ञी । यज्ञं भुङ्क्ते भुनक्तीति वा यज्ञभुक् । यज्ञसाधनं तत्प्राप्ताविति यज्ञसाधनः । यज्ञस्यान्ते फलप्राप्तिं कुर्वन् यज्ञान्तकृत्, वैष्णव्यृक्शंसनेन पूर्णाहुत्या पूर्णं कृत्वा यज्ञसमाप्तिं करोतीति वा यज्ञान्तकृत् ॥ ( ९८० ) ॥ यज्ञानां गुह्यं ज्ञानयज्ञः इष्टफलाभिसन्धिरहिता वा यज्ञः तदभेदोपचारात् ब्रह्म यज्ञगुह्यम् । अद्यते अत्ति च भूतानीत्यन्नम् । अन्नमत्तीति अन्नादः सर्वं जगदन्नादिरूपेणाग्नीषोमात्मकमेवेति दर्शयितुमेवकारः;चशब्दः सर्वात्मनामेकस्मिन्परस्मिन्पुंसि समुच्चित्य वृत्तिं दर्शयितुम्॥ ११८॥ आत्मैव योनिरुपादानकारणं नान्यदित्यात्मयोनिः । निमित्तकारणमपि स एवेति दर्शयितुं स्वयंजात इति । 'प्रकृतिश्च प्रतिज्ञा-

आत्मयोनिः स्वयंजातो वैखानः सामगायनः ॥ देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः॥११९॥

दृष्टान्तानुपरोधात्' इत्यत्र स्थापितमुभयकारणत्वं हरेः । विशेषेण खननाद्वैखानः, धरणीं विशेषेण खनित्वा पातालवासिनं हिरण्याक्षं वाराहं रूपमास्थाय जघानेति पुराणे प्रसिद्धम् । सामानि गायतीति सामगायनः । देवक्याः सुतो देवकीनन्दनः । 'ज्योतींषि शुक्राणि च यानि लोके त्रयो लोका लोकपालास्त्रयी च । त्रयोऽग्नयश्चाहुतयश्च पञ्च सर्वे देवा देवकीपुत्र एव' इति महाभारते । यतः स्रष्टा सर्वलोकस्य । क्षितेर्भूमेरीशः क्षितीशः दशरथात्मजः ॥ ( ९९० ) ॥ कीर्तितः पूजितो ध्यातः स्मृतः पापराशिं नाशयन् पापनाशनः । 'पक्षोपवासाद्यत्पापं पुरुषस्य प्रणश्यति । प्राणायामशतेनैव तत्पापं नश्यते नृणाम् । प्राणायामसहस्रेण

यत्पापं नश्यते नृणाम् । क्षणमात्रेण तत्पापं हरेर्ध्यानात्प्रणश्यति' इति वृद्धशातातपवचनम् ॥ ११९ ॥ पाञ्चजन्याख्यं भूताद्यहङ्कारात्मकं शङ्खं बिभ्रत् शङ्खभृत् । विद्यामयो नन्दकाख्योऽसिरस्येति नन्दकी । मनस्तत्त्वात्मकं सुदर्शनाख्यं चक्रमस्यास्तीति चक्री, संसारचक्रमस्याज्ञया परिवर्तत इति वा चक्री । इन्द्रियाद्यहङ्कारात्मकं शार्ङ्गं नाम धनुरस्यास्तीति शार्ङ्गधन्वा, 'धनुषश्च' इत्यनङ् समासान्तः प्रत्ययः । बुद्धितत्त्वात्मिकां कौमोदकीं नाम गदां वहन् गदाधरः । रथाङ्गं चक्रमस्य पाणौ स्थितं स रथाङ्गपाणिः । अत एवाशक्यक्षोभण इत्यक्षोभ्यः । केवलम् एतावन्त्येवायुधान्यस्येति न नियम्यते, अपि तु सर्वाण्येव प्रहरणान्या-

**शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः । रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ सर्वप्रहरणायुध ओन्नम इति ॥ १२० ॥**

युधान्यस्येति सर्वप्रहरणायुधः । आयुधत्वेनाप्रसिद्धान्यपि करजादीन्यस्यायुधानि भवन्तीत्यन्ते सर्वप्रहरणायुध इति वचनं सत्यसङ्कल्पत्वेन सर्वेश्वरत्वं दर्शयितुम्, 'एष सर्वेश्वरः' इति श्रुतेः । द्विर्वचनं समाप्तिं द्योतयति । ॐ नम इति ओंकारश्चान्ते मङ्गलार्थः । 'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ' इति वचनात् । अन्ते नम इत्युक्त्वा परिचरणं कृतवानिति, 'भूयिष्ठां ते नमउक्तिं विधेम' इति श्रुतेः । 'धन्यं तदेव लग्नं तन्नक्षत्रं तदेव पुण्यमहः । करणस्य च सा सिद्धिर्यत्र हरिः प्राङ् नमस्क्रियते' इति च प्रागित्युपलक्षणम्, अन्तेऽपि नमस्कारस्य शिष्टैराचरणात् । नमस्कार-

फलं प्रागेव दर्शितम्, 'एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय' 'अतसीपुष्पसङ्काशं पीतवाससमच्युतम् । ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥ लोकत्रयाधिपतिमप्रतिमप्रभावमीषत्प्रणम्य शिरसा प्रभविष्णुमीशम् । जन्मान्तरप्रलयकल्पसहस्रजातमाशु प्रशान्तिमुपयाति नरस्य पापम्(१०००) ॥ १२० ॥ इति नाम्नां दशमं शतं विवृतम् ॥ नामसहस्रमन्यूनातिरिक्तमिति दर्शयति इतीदमित्येतेन । दिव्यानामप्राकृतानां नाम्नां सहस्रं प्रकीर्तितमिति वदता प्रकारान्तरेणापि संख्योपपत्तिर्दर्शिता ॥ १२१ ॥ प्रक्रमे 'किं जपन्मुच्यते जन्तुः' इति जपशब्दोपा-

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ॥ नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १२१ ॥
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ॥ नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः ॥ १२२ ॥
वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ॥ वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ १२३ ॥

दानात् कीर्तयेदित्यनेनापि त्रिविधजपो लक्ष्यते उच्चोपांशुमानसलक्षणस्त्रिविधः । य इदं शृणुयादित्यादिः स्पष्टार्थः । परलोकप्राप्तस्यापि नहुषादिवदशुभप्राप्त्यभावं सूचयितुममुत्रेत्युक्तम् ॥ १२२ ॥ वेदान्तानामर्थं ब्रह्म गच्छत्यवगच्छतीति वेदान्तगः । 'किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात्' इति वचनात् जपकर्मणा साक्षान्मुक्तेराशङ्कायां कर्मणां साक्षान्मोक्षहेतुत्वं नास्ति ज्ञानेनैव मोक्ष इति दर्शयितुं वेदान्तगो ब्राह्मणः स्यादित्युक्तम् । कर्मणां त्वन्तःकरणशुद्धिद्वारेण मोक्षहेतुत्वम् । 'कषायपक्तिः कर्माणि ज्ञानं

 

तु परमा गतिः।कषायें कर्मभिः पक्के ततो ज्ञानं प्रवर्तते॥नित्यं ज्ञानं समासाद्य नरा बन्धात्प्रमुच्यते। धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥ योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये । कर्मणा बध्यते जन्तुर्विद्ययैव विमुच्यते ॥ तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः । यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ॥ आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्' इति मानवं वचनम् । 'तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते' इति, 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथाऽऽदर्शतले प्रख्ये पश्यत्यात्मानमात्मनि' इत्यादिस्मृतिभ्यश्च 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' 'येन केनचिद्यजताऽपि यज्ञेनापि दर्विहोमेनानुपहतमना एव भवति' इत्यादिस्मृतिभ्यः ज्ञानादेव मोक्षः । 'ब्रह्मविदाप्नोति परम् । तरति शोकमात्मवित् । ब्रह्मविद्ब्रह्मैव भवति । ब्रह्मैव सन् ब्रह्माप्येति । तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति । 'विद्वान्न बिभेति कुतश्चन । इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः । यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इत्यादिश्रुतिभ्यः । शूद्रः सुखमवाप्नुयादिति श्रवणेनैव न तु जपयज्ञेन 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति श्रुतेः, 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः' इत्यादिना महाभारतादिश्रवणमनुज्ञायते 'सुगतिमियाच्छ्रवणाच्च शूद्रयोनिः' इति हरिवंशे । यच्च शूद्रः शृणुयात्स सुखमवाप्नुयात् इति व्यवहितेन सम्बन्धः त्रैवर्णिकानां कीर्तयेदित्यन्तेन ॥ १२३ ॥

चक्षुरादीनामात्मयुक्तेन मनसाऽधिष्ठितानां स्वेषु स्वेषु विषयेष्वनुरूपतः प्रवृत्तिः कामः। प्रजायत इति प्रजा सन्ततिः ॥ १२४ ॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ॥ कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात्प्रजाः ॥ १२४ ॥
भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ॥ सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ १२५ ॥
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ॥ अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ १२६ ॥
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ॥ भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥ १२७ ॥
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ १२८ ॥
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ॥ स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ १२९ ॥
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ॥ सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १३० ॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ॥ जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ १३१ ॥

भक्तिमानित्यादिना भक्तिमतः शुचेः सततमुद्युक्तस्यैकाग्रचित्तस्य श्रद्धालोर्विशिष्टफलाधिकारिणः फलविशेषं दर्शयति ॥ १२५ ॥ ॥ १२६ ॥ १२७ ॥ १२८ ॥ १२९ ॥ १३० ॥ १३१ ॥

श्रद्धा आस्तिक्यबुद्धिः। भक्तिर्भजनतात्पर्यम् आत्मनः सुखम् आत्मसुखं तेन च क्षान्त्यादिभिश्च युज्येत ॥ १३२ ॥ न-क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिरिति नकारानुबन्धरहितेन नकारेण समस्तपदत्रयं क्रोधादयो न भवन्ति मात्सर्यं च

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ॥ युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १३२ ॥
न क्रोधो न च मात्सर्यं नलोभो नाशुभा मतिः ॥ भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३३ ॥
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ॥ वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १३४ ॥
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ॥ जगद्वशे वर्ततेऽदः कृष्णस्य सचराचरम् ॥ १३५ ॥
इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ॥ वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १३६ ॥
सर्वागमानामाचारः प्रथमं परिकल्प्यते ॥ आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १३७ ॥

न भवतीत्यर्थः ॥ १३३ ॥ द्यौः सचन्द्रार्कनक्षत्रेत्यादिना स्तुत्यस्य वासुदेवस्य माहात्म्यकथनेनोक्तानां फलानां प्राप्तिवचनं यथार्थकथनं नार्थवाद इति दर्शयति ॥ १३४ ॥ १३५ ॥ १३६ ॥ 'सर्वागमानामा-चारः प्रथमं परिकल्प्यते। आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः' इत्यनेनावान्तरवाक्येन सर्वधर्माणामाचारवत एवा-

धिकार इति दर्शयति ॥१३७॥१३८॥१३९॥१४०॥ इमं स्तवमित्यादि नामसहस्रशाखाङ्गेन सर्वज्ञेन भगवता कृष्णद्वैपायनेन साक्षान्नारायणेन कृतमिति सर्वैरर्थिभिः सादरं पठितव्यं सर्वफलसिद्ध्य इति दर्शयति विश्वेश्वरमित्यादिना । विश्वेश्वरोपासनादेव

ऋषयः पितरो देवा महाभूतानि धातवः ॥ जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १३८ ॥ योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादि कर्म च ॥ वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १३९ ॥ एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ॥ त्रींल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥१४०॥ इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ॥ पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ १४१ ॥ विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ॥ भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ १४२ ॥ अर्जुन उवाच ॥ पद्मपत्रविशालाक्ष पद्मनाभ सुरोत्तम ॥ भक्तानामनुरक्तानां त्राता भव जनार्दन ॥ १४३ ॥ श्रीभगवानुवाच ॥ यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव ॥ सोऽहमेकेन श्लोकेन स्तुत एव न संशयः ॥ १४४ ॥

स्तोतारस्ते धन्याः कृतार्थाः कृतकृत्या इति 'आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात्' इति व्यासवचनम् । "प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः" ॥ १४१ ॥

१४२॥१४३॥१४४॥१४५॥ सहस्रनामसम्बन्धव्याख्या सर्वसुखावहा । श्रुतिस्मृतिन्यायमूला रचिता हरिपादयोः ॥ १ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशङ्कराचार्यविरचितं विष्णोर्नामसहस्रभाष्यं समाप्तम् ॥ एतेषां सहस्रनाम्नां संख्येयम् ॥ अच्युतः

नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥ १४९ ॥ इति विष्णुसहस्रनामस्तोत्रं सम्पूर्णम् ॥

१०० ॥ सिंहः २०० ॥ युगादिकृत् ३०० ॥ अनयः ४०० ॥ भोक्ता ५०० ॥ शिवः ६०० ॥ सत्कीर्तिः ७०० ॥ सुवर्णबिन्दुः ८०० ॥ अप्ययः ९०० ॥ सर्वप्रहरणायुधः ॥ १००० ॥






इदं पुस्तकं क्षेमराज श्रीकृष्णदासेन मुम्बय्यां निजे "श्रीवेङ्कटेश्वर" स्टीम् मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् । शकाब्दाः १८५२, संवदब्दाः १९८७.

# क्रय्य पुस्तकें ।

| नाम. | की० रु० आ० |
| --- | --- |
| विष्णुकवच—इसके पाठसे सर्व ज्वर शान्त होते हैं. | ०—१ |
| विष्णुसहस्रनाम—बहुत बड़े अक्षरका | ०—८ |
| विष्णुसहस्रनाम—'भगवद्गुणदर्पण' भाष्यानुसार पाठक्रम | ०—२॥ |
| विष्णुसहस्रनाम—'निर्वचन' और 'निरुक्ति' नामक दो व्याख्यायुक्त "भगवद्गुणदर्पण" नामक विशाल भाष्यसहित । इसमें प्रथम मूलोक्त नाम, उसकी संख्या, नीचे क्रमशः 'नमः' शब्दयुक्त चतुर्थ्यन्त नामावली, फिर भाष्य, पाणिनीय व्याकरणानुसार प्रकृति-प्रत्यय-प्रदर्शक 'लक्ष्मीवेङ्कटेश्वर' प्रेसमें छपी सिद्धान्तकौमुदीके पृष्ठांक सहित शब्दसाधक सूत्र, धात्वादियुक्त निर्वचन और रामानुजभाष्यानुकूल अर्थप्रतिपादक कारिकारूप निरुक्तिटीका तथा टिप्पण भी है । इसके द्वारा श्रीविष्णु भगवान्के हजार नामोंका यथार्थ अर्थ जाननेके साथ साथ उनका निर्वचन ज्ञात होनेसे वैयाकरणोंको व्याकरणसंबन्धी बोध भी प्रखर होता है. | ५—० |

| नाम. | की० रु० आ० |
|---|---|
| विष्णुसहस्रनामस्तोत्र–इसमें पदच्छेद किये हैं. | ०–४ |
| विष्णुसहस्रनाम–सप्तश्लोकीगीता–सहित १६ पेजी | ०–२ |
| विष्णुसहस्रनाम–चित्रसहित, बड़ा अक्षर, रेशमी गुटका. | ०–७ |
| विष्णुसहस्रनाम–अष्टादशश्लोकी गीता, सप्तश्लोकी गीता; चतुःश्लोकी भागवत सहित | ०–१॥ |
| विष्णुसहस्रनाम–भाषाटीकासहित | ०–७ |
| विष्णुसहस्रनाम–भाषापद्यानुवाद | ०–३ |
| विष्णुसहस्रनाम–दीपिकाभाषाटीकासहित | ०–१४ |
| विष्णुसहस्रनाम–महावनशास्त्रिकृत भाषाटीका-सहित, गुटका | ०–६ |
| विष्णुसहस्रनाम–शांकरभाष्यस्थ व्युत्पत्तिसहित, चन्द्रिका भाषाटीकासहित | ०–१२ |
| विष्णुपूजन–भाषाटीकासहित. | ०–२ |
| विष्णुसहस्रनामावली–पुष्प तथा तुलसी आदि भगवान्‌पर अर्पण करनेके लिये सुगमताके साथ पृथक् २ नाम है | ०–२ |
| वेङ्कटेशचतुर्दशमञ्जरिकास्तोत्र–भाषाटीकासहित | ०–१ |
| वेङ्कटेशसहस्रनामावली | ०–२ |
| वेङ्कटेशसहस्रनाम | ०–३ |
| वेङ्कटेशसहस्रनाम–भूषणटीकासहित | ०–१२ |
| वेङ्कटेशक्षमात्रयस्त्रिंशच्छ्लोकी–भाषाटीकासहित। | ०–१ |
| श्रीवेङ्कटेशस्तोत्र–गजेन्द्रमोक्ष, मारुतिस्तोत्र, शिवस्तव, गणेशस्तवसहित मराठी पद्यमें | ०–१॥ |

| नाम. | की० रु० आ० |
| --- | --- |
| वेदोक्तशिवार्चनपद्धति–( शिवपूजाविधान ) | ०–४ |
| शतनामाकरस्तोत्र | ०–१ |
| शनिमृत्युञ्जयस्तोत्र | ०–१ |
| शिवस्तोत्र–उपमन्युकृत। भाषाटीकासहित. | ०–०।।। |
| शिवस्तोत्र–छन्दबद्ध भाषा | ०–०।।। |
| शिवताण्डवस्तोत्र–स्व० वि० वा० पं० ज्वालाप्रसादजी मिश्रकृत भाषाटीकासहित. | ०–१।। |
| शिवसहस्रनाम–मूल | ०–३ |
| शिवसहस्रनामस्तोत्र–( लिङ्गमहापुराणान्तर्गत ) शिवतोषिणीनामक संस्कृतटीकासहित. | ०–६ |
| शिवसहस्रनाम–स्व० वि० वा० प० ज्वालाप्रसाद मिश्रकृत भाषाटीकासहित. | ०–६ |

| नाम. | की० रु० आ० |
| --- | --- |
| शिवमहिम्नस्तोत्र–छोटा. | ०–१ |
| शिवमहिम्नस्तोत्र–वेदसारशिवस्तोत्रसहित मूल। बड़े अक्षर | ०–१।। |
| शिवमहिम्नस्तोत्र–वेदसारस्तोत्र, पार्थिवपूजा, शिवापराधक्षमापनस्तोत्र–सहित. | ०–१।। |
| शिवमहिम्नस्तोत्र–सान्वय भाषाटीकासहित. | ०–१।। |
| शिवकवच | ०–१ |
| शिवमहापूजा | ०–२ |
| श्रीशिवस्तुति–महाकवि गोकुलनाथोपध्यायरचित, भाषाटीकासहित। जिस प्रकार पुष्पदन्ताचार्यने 'शिखरिणी' छन्दमें 'शिवमहिम्नस्तोत्र' की रचना की है उसी प्रकार | |

जा०
॥२॥

| नाम. | की० रु० आ० |
| --- | --- |
| दार्शनिक शैलीसे निरीश्वरवादी नास्तिकोंके मतका निरसन करते हुए'पुष्पिताग्रा'छन्दके १०९ पद्योंमें यह स्तुति समाप्त हुई है। | |

| नाम. | की० रु० आ० |
| --- | --- |
| श्लोकसंख्याके समान ही प्रकाण्ड दार्शनिक पाण्डित्यमें भी यह 'महिम्न' से बहुत बड़ी है | ०–६ |
| शिवसहस्रनामावली | ०–२ |

रा०

पुस्तकें मिलनेका ठिकाना–

खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम्–प्रेस,
बम्बई.

गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर" प्रेस,
कल्याण–बम्बई.


मुद्रक और प्रकाशक–
खेमराज श्रीकृष्णदास,
मालक–"श्रीवेंकटेश्वर" स्टीम् प्रेस, बम्बई.




॥२॥

# क्रय्यपुस्तकानि ।

| नाम. | की. रु. आ. |
|---|---|
| विष्णुसहस्रनाम–भाषाटीकासहित | ०–७ |
| विष्णुसहस्रनाम–भाषापद्यानुवाद | ०–३ |
| विष्णुसहस्रनाम–दीपिका भाषाटीका सहित. ... ... ... | ०–१४ |
| विष्णुसहस्रनाम–महावनशास्त्रिकृत भाषाटीकासहित, गुटका ... ... | ०–६ |
| विष्णुसहस्रनाम–शांकरभाष्यस्थ व्युत्पत्तिसहित, चन्द्रिका भाषाटीका सहित, ... ... ... ... | ०–१२ |
| विष्णुपूजन–भाषाटीकासहित ... | ०–२ |

पुस्तकें मिलनेका ठिकाना–

खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम्–प्रेस, बम्बई.

गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर"–प्रेस, कल्याण–बम्बई.

